(७)उपासका-न्तकृ-दनुत्तरोपपातिका दशाः[९] ।
प्रश्नव्याकरणं[१०] चैव विपाकश्रुत[११] मेव च ॥१५८॥
(१)इत्येकादश सोपाङ्गान्य ङ्गानि[१] द्वादशं पुनः(२) ।
दृष्टिवादो[१] द्वादशाङ्गी[१] स्या द्गणिपिटका[२] ह्वया(३) ॥१५९॥
(४)परिकर्म्म[१]-सूत्र[२]-पूर्व्वानुयोग[३]-पूर्वगत[४]-चूलिकाः[५] पञ्च ।
स्यु र्दृष्टिवादभेदाः पूर्व्वाणि[१] (५)चतुर्दशा पि पूर्व्वगते ॥१६०॥
(६)उत्पाद[१] पूर्व्वमग्रायणीय[२] मथ वीर्य्य[८]तः प्रवादं[८] स्यात्(७)
अस्ति ज्ञाना त्सत्या त्तदा त्मनः कर्म्मणश्च परम् ॥१६१॥
प्रत्याख्यानं[९] विद्याप्रवाद[१०]-कल्याण[११]-नामधेये च ।
प्राणावायं[१२] च क्रियाविशाल[१३] मथ लोकबिन्दुसार[१४]मिति॥
स्वाध्यायः[१] श्रुति[२] राम्नाय[३] श्छन्दो[४] वेद[५] स्त्रयी[६] पुनः ।
ऋग्यजुः सामवेदाः स्यु रथर्व्वा तु तदुद्धृतिः ॥१६२॥

---

(१) उपासकाश्च अन्तकृतश्च अनुत्तरोपपातिकाश्चेति समाहारद्वन्द्वः, तस्मात् दशा इति प्रत्येकं योज्यते, तेन उपासकदशाः१अन्तकृद्दशाः२अनुत्तरोपपातिकदशाः३इति, एषां त्रयाणां ग्रन्थानां नाम बहुवचनान्तम्॥

(२) इत्येकादशप्रवचनपुरुषस्य अङ्गानी वाङ्गानि, किं भूतानि ! सह उपाङ्गैरौपपादिकादिभि र्द्वादशभि र्वर्त्तन्ते यानि तानि सोपाङ्गानि ॥

(३) द्वादशाङ्गस्य ॥ (४) द्वादशाङ्ग्याः ॥

(५) दृष्टिवादभेदानामेकैकम् ॥

(६) वक्ष्यमाणानि चतुर्दश पूर्व्वगते पूर्व्वाणीत्युच्यन्ते ॥

(७) पूर्व्वदृष्टिवादभेदानामेकैकम् ॥

(८) वीर्य्यतः वीर्य्यशब्दात् प्रवादं वीर्य्यप्रवादम्१ तदिति प्रवादम-स्त्यादिभ्यः परं योज्यम् ' अस्तीति नास्तेरप्युपलक्षणम् ततः अस्तिनास्तिप्रवादम्२ ज्ञानप्रवादम्३ सत्यप्रवादम्४ आत्मप्रवादम्५ कर्मप्रवादम्६ प्रत्याख्यानप्रवादम्७ ॥

वेदान्तः[1] स्या दुपनिषदो[2] ङ्कार[1]-प्रणवौ[1] समौ ।
(१)शिक्षा[1] कल्पो[1] व्याकरणं[1] छन्दो[4]-ज्योति[1]-र्निरुक्तयः[1] ॥
षडङ्गानि[1] धर्म्मशास्त्रं[1] स्यात् स्मृति[1] र्धर्म्मसंहिता[1] ।
आन्वीक्षिकी[1] तर्कविद्या[1] मीमांसा[1] तु विचारणा[1] ॥१६५॥
सर्ग[1] श्च प्रतिसर्ग[1] श्च वंशो[1] मन्वन्तराणि च[4] ।
वंशानुवंशचरितं[1] पुराणं[1] पञ्चलक्षणम् ॥१६६॥
अङ्गानि[1] वेदा श्चत्वारो[4] मीमांसा[1] ऽन्वीक्षिकी[1] तथा ।
धर्म्मशास्त्रं[1] पुराणं[1] च विद्या एता श्चतुर्दश ॥१६७॥
(२)सूत्रं[1] सूचनकृद् भाष्यं[1] सूत्रोक्तार्थ प्रपञ्चकम् ।
प्रस्ताव[1] स्तु प्रकरणं[1] (३)निरुक्तं[1] पदभञ्जनम् ॥१६८॥
अवान्तरप्रकरणविश्रामे(४) शीघ्रपाठतः ।
आह्निकं[1] अधिकरणं[1] (५)त्वेकन्यायोपपादनम् ॥१६९॥
उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम्[1](६) ।

---

(१) एकैकं तत्तच्छास्त्रं ज्ञेयम् ॥

(२) सूत्रं क्लीबे, पुंस्यपीति कश्चित् ॥

(३) "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरस्थितम् आहुः । प्रकरणं नाम शास्त्रभेदं विपश्चितः" ॥

(४) अवान्तरप्रकरणानां विश्रामो यत्रावयवे इत्यर्थः, तदाह्निकमित्युच्यते यदनेकार्थः "आह्निकं स्यात् पुनरहर्निर्वर्त्ये नित्यकर्मणि । ग्रन्थे ग्रन्थभागे चेति" ग्रन्थभागे ग्रन्थावयवे इति तट्टीका ।

(५) एकं न्याय मुपपादयतीति अधिकार इति यावत्, तच्च न अधिकरणमिति ॥

(६) उक्तानामनुक्तानां दुरुक्तानां चार्थानां चिन्ता यत्र [illegible] ग्रन्थस्य नाम वार्त्तिकम् ॥

टीका[1] निरन्तरव्याख्या(1) पञ्जिका[1] पदभञ्जिका(2) ॥१७०॥
निबन्ध[1]-वृत्ती[2] ग्रन्थार्थे(3) संग्रह[1]स्तु समाहृतिः[2] ।
(4)परिशिष्ट[1]-पद्धत्या[2]-दीन् यथा ऽनेन समुन्नयेत् ॥१७१॥
कारिका[1] तु स्वल्पवृत्तौ बहोरर्थस्य सूचनम् ।
कलिन्दिका[1] सर्वविद्या(5) निघण्टु[1]र्नामसंग्रहः[2] ॥१७२॥
इतिहासः[1] पुरावृत्तं(6) प्रवह्लिका[1] प्रहेलिका[2] ।
जनश्रुतिः[1] किंवदन्ती[2] वार्त्तैतिह्यं[1] पुरातनी ॥१७३॥
वार्त्ता[1] प्रवृत्ति[2]र्वृत्तान्त[3] उदन्तो[4] ऽथा ह्वयो[1] ऽभिधा[2] ।
गोत्र[3]-संज्ञा[4]-नामधेया[5]-ऽऽख्या[6]-ऽऽह्वा[7]-ऽभिख्या[8]श्च नाम च॥
सम्बोधन[1]मामन्त्रण[2]माह्वानं[1] त्वभिमन्त्रणम् ।
आकारणं[2] हवो[4] हूतिः[5] संहूति[1]र्बहुभिः कृता ॥१७५॥
उदाहार[1] उपोद्घात[2] उपन्यास[3]श्च वाङ्मुखम्[4] ।
व्यवहारो[1] विवादः[2] स्यात् शपथः[1] शपनं[2] शपः[3] ॥१७६॥

---

(1) सुगमानां विषमाणाञ्चार्थानां निरन्तरम् अन्तराभावेनाविच्छेदेन व्याख्या "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" इत्युक्ता पञ्चलक्षणान्विता यस्यां सा निरन्तरव्याख्या, एवंविधो यो ग्रन्थस्तस्य नामैकं टीका ॥

(2) विषमाण्येव पदानि अर्थांश्च भनक्ति व्याख्यातीति पदभञ्जिका तद्विध ग्रन्थस्य नामैकं पञ्जिका ।

(3) अनुगतो मिलितोऽर्थो यत्रासौ ग्रन्थे ॥

(4) एकैकं ज्ञेयम्, अपि च, अनेन यथा अन्यदपि मार्गेणैव परिशिष्टं च परिशिष्ट-पद्धती ते आदौ येषां तथा तान् समुन्नयेत् जानीयात् आदिपदग्रहणात् अध्यायः उच्छ्वासः अङ्कः सर्गः इत्यादयो ग्रन्थावयवविशेषा ज्ञेयाः ।

(5) अकारान्तोऽयम् पुं ॥

(6) पूर्वचरितमित्यर्थः ॥

उत्तरं[1] तु प्रतिवचः[2] प्रश्नः[1] पृच्छा[2]ऽनुयोजनम्।
(1)कथङ्कथिकता[4] चाथ देवप्रश्न[1] उपश्रुतिः[2] ॥१७७॥
(2)चटु[1] चाटु[2] प्रियप्रायं प्रियसत्यं तु सूनृतम्।
सत्यं[1] सम्यक्[2] समीचीनं[3] ऋतं[4] तथ्यं[5] यथातथम्[6] ॥१७८॥
यथास्थितं[7] च सद्भूते[8]ऽलीके[1] तु वितथा[2]नृते[3]।
अथ क्लिष्टं[1] सङ्कुलं[2] च परस्परपराहतम् ॥१७९॥
सान्त्वं[1] सुमधुरं ग्राम्यं[1] अश्लीलं[2] म्लिष्टं[1] अस्फुटम्।
लुप्तवर्णपदं ग्रस्तं[1] अवाच्यं[1] स्यादनक्षरम्[2] ॥१८०॥
अम्बूकृतं[1] सथूत्कारं निरस्तं[1] त्वरयोदितम्।
आम्रेडितं[1] द्विस्त्रिरुक्तं अबद्धं[1] तु निरर्थकम्(3) ॥१८१॥
पृष्ठमांसादनं तद्वत् परोक्षे दोषकीर्त्तनम्।
मिथ्याभियोगोऽभ्याख्यानं[1] सङ्गतं[1] हृदयङ्गमम् ॥१८२॥
परुषं[1] निष्ठुरं[2] रूक्षं[3] विक्रुष्टं[4] अथ घोषणा[1]।
उच्चैर्घुष्टं[2] वर्णने डा[2] स्तवः[3] स्तोत्रं[4] स्तुति[5]र्नुतिः[6] ॥१८३॥
श्लाघा[7] प्रशंसा[8] र्थवादः[9] सा तु मिथ्या विकत्थनम्[1]।
(4)जनप्रवादः[1] कौलीनं[2] विगानं[3] वचनीयता[4] ॥१८४॥
स्यादवर्ण[1] उपक्रोशो[2] वादो[5] नि-पर्य्य-पात् परः(5)।
गर्हणा[6] धिक्क्रिया[7] निन्दा[8] कुत्सा[9] क्षेपो[10] जुगुप्सनम्[11]॥

---

(1) कथं कथं हे यत्र इति जल्पो यस्याम् ॥

(2) चटुः पुंक्ली, चाटुरपि पुंक्ली, प्रियं इष्टं वचनोऽनुकूलमित्यर्थः॥

(3) अर्थेन असम्बद्धं यथा दशदाडिमादि वाक्यं समुदायार्थशून्यम्॥

(4) लोकापवादस्य ॥

(5) निरः परेः अपात् चोपसर्गात् परः अग्रे वादः इति योज्यमनेन निर्वादः१ परिवादः२ अपवाद इति ॥

आक्रोशा[1]-भीषङ्गा[2]-क्षेपाः[3] शापः[4] स आक्षारा[1] रते।
विरुद्धशंसनं गालि[(1)]राशी[1]र्मङ्गलशंसनम् ॥१८६॥
श्लोकः[1] कीर्त्ति[2]र्यशो[3]ऽभिख्या[4] समाज्ञा[5] कुमती[1] पुनः[(2)]।
अशुभावाक् शुभा कल्या[1] चर्चरी[1] चर्भटी[2] समे[(3)] ॥१८७॥
यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम्[1]।
आपृच्छा[1]ऽऽलापः[2] सम्भाषो[1]ऽनुलापः[1] स्यात् मुहुर्वचः ॥१८८॥
अनर्थकं तु प्रलापो[1] विलापः[1] परिदेवनम्[2]।
उल्लापः[(4)] काकुवागन्योन्योक्तिः[(5)] संलाप[1]-सङ्कथे[2] ॥१८९॥
विप्रलापो[1] विरुद्धोक्ति रपलाप[1] स्तु निह्नवः।
सुप्रलापः[1] सुवचनं सन्देशवाक्तु वाचिकम् ॥१९०॥
आज्ञा[1] शिष्टि[2]र्नि-रा-ङ्-भ्यो[(6)] देशो[5] नियोग[6]-शासने[7]
अववादो[8]ऽप्यथाह्वयप्रेषणं[(7)] प्रतिशासनम् ।१९१॥
संवि[1]त्सन्धा[2]ऽऽस्था[3]ऽभ्युपायः[4] सं-प्रत्या-ङ्-भ्यः परः श्रवः[7][(8)]
अङ्गीकारो[8]ऽभ्युपगमः[9] प्रतिज्ञा[10]ऽऽगू[11] श्च सङ्गरः[12] ॥१९२

(१) गालिः स्त्रीलिङ्गं, तथा आशीरपि, आशीः आशिषौ आशिष इति रूपम् ॥

(२) समज्ञा इति वा पाठः, कुमती अपत्यवाचः वाग्विशेषोऽयम् ॥

(३) हर्षक्रीडा वचसो नामनी द्वे।

(४) काकोः वचनं काकुवाक्, शोकभयादिभिः शोभितकण्ठ ध्वनिः काकुः, यदमर आह, "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरिति" शोकभयादिभिः शोभितकण्ठध्वानयुक्तो वाक् काकुवाक् इति ॥

(५) अन्योन्येन उक्तिभाषणम् ॥

(६) निराङ्भ्य उपसर्गेभ्योऽपि देशः, निर्देशः१ आदेशः२ निदेशः॥

(७) आह्वय आकारणं यत्प्रेषणं बोधनम् ॥

(८) संप्रत्याङ्भ्य उपसर्गेभ्यः परोऽपि श्रवः, तेन संश्रवः१ प्रतिश्रवः२ आश्रवश्च ॥

गीत-नृत्य-वाद्य-त्रयं[(1)] नाट्यं[1] तौर्य्यत्रिकं[2] च तत् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका[1][(2)] ॥१८३॥
गीतं[1] गानं[2] गेयं[3] गीति[4] र्गान्धर्वं[5] अथ नर्त्तनम् ।
नटनं[2] नृत्यं[3] च नृत्तं[4] च लास्यं[5] नाट्यं[6] च ताण्डवम्[7] ॥१८४॥
मण्डलेन तु यन्नृत्तं स्त्रीणां हल्लीसकं[1] हि तत्[(3)] ।
पानगोष्ठ्यां सुरतालं[1] रणे वीरजयन्तिका[1] ॥१८५॥
स्थानं नाट्यस्य रङ्गः[1] स्यात् पूर्वरङ्गः उपक्रमः[1] ।
अङ्गहारो[1]ऽङ्गविक्षेपो व्यञ्जको[1]ऽभिनयः[2] समौ[(4)] ॥१८६॥
स चतुर्विध आहार्यो[1] रचितो भूषणादिना ।
वचसा वाचिको[1]ऽङ्गेनाङ्गिकः[1] सत्त्वेन सात्त्विकः[1] ॥१८७॥
स्युर्नाटकं[1] प्रकरणं[2] भाणः[3] प्रहसनं[4] डिमः[5] ।
व्यायोग[6]-समवकारौ[7] वीथ्य[8]-ङ्के[9]-हामृगा[10] इति[(5)] ॥१८८॥
अभिनेयप्रकाराः स्युर्भाषाः षट् संस्कृतादिकाः[(6)] ।
भारती[1] सात्वती[2] कैशिक्या[3]-रभट्यौ[4] च वृत्तयः[1][(7)] ॥१८९॥

---

(१) भरतादिशास्त्रनिर्दिष्टं गीत-नृत्य-वाद्य-त्रयं तन्नामैकं तौर्य्यत्रिकमिति ॥

(२) अस्मिन्निति भरतादिशास्त्र उक्तैः, नाट्यधर्मी इति प्राथमिकम् अत्र सार्थकः नाट्यधर्मिणा स्त्रीलिङ्गः, सभ्यानां प्रेक्षणार्थं प्रारब्धस्य तौर्य्यत्रिकस्यैव नाम ॥

(३) स्त्री, वाचस्पतिस्तु हल्लीसकोऽस्त्रियामित्याह ॥

(४) हस्तादिभिः कृताभिनयस्य ।

(५) रूपकप्रबन्धभेदानामेवैते । व्यायोगः समवाकारौ इति वा पाठः ॥

(६) संस्कृत१ प्राकृत२ मागधी३ शौरसेनी४ पैशाची५ अपभ्रंश६ भेदात् षड्भाषा उच्यन्ते ॥

(७) भारत्यादीनां चतसृणां ॥

वाद्यं[1] वादित्र[2] मातोद्यं[3] तूर्य्यं[4](१) तूरं[5] मारक्षणः[6] ।
ततं[1] वीणाप्रभृतिकं तालप्रभृतिकं घनम्[1] ॥२००॥
वंशादिकन्तु शुषिरं[1] मानद्धं[1] मुरजादिकम् ।
वीणा[1] पुनर्घोषवती[2] विपञ्ची[3] कण्ठकूणिका ॥२०१॥
वल्लकी[5] सा ऽथ तन्त्रीभिः सप्तभिः परिवादिनी[1] ।
शिवस्य वीणा ऽनालम्बी[1] सरस्वत्यास्तु कच्छपी[1] ॥२०२॥
नारदस्य तु महती[1] गणानां तु प्रभावती[1] ।
विश्वावसोस्तु बृहती[1] तुम्बुरोस्तु कलावती[1] ॥२०३॥
चण्डालानां तु कटोल(२) वीणा[1] चाण्डालिका[2] च सा ।
कायः कोलम्बक[1] स्तस्या उपनाहो निबन्धनम् ॥२०४॥
दण्डः पुनः प्रवालः[1] स्यात्ककुभ[1] स्तु प्रसेवकः[2] ।
मूले वंशशलाका स्यात् कलिका कूणिका[2] ऽपि च ॥२०५॥
कालस्य क्रियया मानं तालः साम्यं पुन र्लयः (३) ।
द्रुतं विलम्बितं मध्य मोघ स्तत्त्वं[2] घनं क्रमात् ॥२०६॥
मृदङ्गो[1] मुरजः[2] सोऽङ्क्या[1] (४)ऽलिङ्ग्य[2] ऊर्ध्वक[3] इति त्रिधा ।
स्याद्यशः पटहो[1] ढक्का[2] (५)भेरी[1] दुन्दुभि[2] रानकः[3] ॥२०७॥

---

(१) तूर्य्यमिति पुंक्ली ॥ (२) कण्डोल इति वा पाठः ।

(३) द्रुतादि लयानामेकैकम् ॥

(४) अङ्क्यो अङ्किनौ अङ्किनः, आलिङ्ग्यो आलिङ्गिनौ द्राविनप्रत्ययान्तौ आलिङ्गिनश्च ॥

(५) तथा च रत्नोदयः "सार्द्धहस्तत्रयं मानं भेरीणां समुदाहृतम् । पिण्डे षडङ्गुला प्रोक्ता वादयेन्मुखयोर्द्वयोः ।। क्षिरिरे भङ्गिरे भुङ्गदङ्गिरे भंघिरे घङ्गिने भुभुसे । पञ्चतालेषु भेरीबुधैः प्रोच्यते" वार्त्तिकास्तु भेरीदण्डयोः संयोगः बहिर्भेरी दण्डाभ्यां भिन्न इत्यत

पटहो[४]ऽथ शारिका[२] स्यात् कोणो[१] (१)वीणादिवादनम्।
(२)शृङ्गार[१]-हास्य[२]-करुणा[३] रौद्र[४]-वीर[५]-भयानकाः[६] ॥२०८
बीभत्सा[७]ऽद्भुत[८]-शान्ताश्च रसा[१] भावाः[१] पुनस्त्रिधा।
स्थायि[१]-सात्त्विक[२]-सञ्चारि[३]-प्रभेदैः स्याद्रतिः[१] पुनः ॥२०९
रागो[२]ऽनुरागो[३]ऽनुरति[४] र्हास[१]स्तु हसनं[२] हसः[३]।
घर्घरो[४] हासिका[५] हास्यं[६] तत्र हष्टरदे स्मितम्[१] ॥२१०॥
वक्रोष्ठिका[२]ऽथ हसितं[१] किञ्चि हष्टरदाङ्कुरे(३)।
किञ्चि च्छ्रुते विहसित[१] मट्टहासो[१] महीयसि ॥२११॥
अतिहास[१]स्त्वनुस्यूते (४)ऽपहासो[१] कारणा द्धते।
सोत्प्रासे त्वा च्छुरितकं[१] हसनं[१] स्फुरदोष्ठके(५) ॥२१२॥
शोकः[१] शुक्(६) शोचनं[२] खेदः[४] क्रोधो[१] मन्युः[२] क्रुधा रुषा[४]।
क्रुत्[५] कोपः प्रतिघो[७] रोषो[८] रुट्[९] चोत्साहः[१] प्रगल्भता[२]॥
अभियोगो[३](७)-द्यमौ[४] प्रौढ़ि[५] रुद्योगः[६] कियदेतिका[७]।
अध्यवसाय[८] ऊर्ज्जो[९]ऽथ वीर्य्यं[१] सो ऽतिशयान्वितः ॥२१३॥

---

भेरी शब्देन "दमदमा" इति लोकप्रसिद्धस्य नाम इत्याहुः, अपरे तु आद्ये द्वे भेरी नाम्नी इत्याहुः। भेरी स्त्री, दुन्दुभी पुं, आनकोपि पुं, भिःप टहः पुंक्ली।

(१) कोणः पुं, द्वयोस्तु कोण इति वाचस्पतिः।

(२) शृङ्गारशब्दस्तु पुंक्ली। हास्यादयस्तु पुंलिङ्गाः।

(३) किञ्चित् लोकत्वात् दृष्टा विलोकिता रदा दन्ता एव अङ्कुरा यस्मिन् स किञ्चिद्दृष्टरदाङ्कुरः तस्मिन् एवंविधे हासे इत्यर्थः।

(४) निरन्तरे इत्यर्थः।

(५) स्फुरन् चलन् ओष्ठो यस्मिन् स तथा तस्मिन् स्फुरदोष्ठके हासे

(६) शुक् स्त्री, मन्युः पुं, क्रुत् स्त्री, रुट् स्त्री।

(७) पुंक्ली अयौ।

भयं[१] भीः[२] भीति[३] रातङ्क[४] आशङ्का[५] साध्वसं[६] दरः[७] ।
भियाऽत्र[८(१)] तु स्वादिभयं[१] भूपतीनां स्वपक्षजम् ॥२१५॥
अदृष्टं[१] वह्नितोयादे दृष्टं[१] स्वपरचक्रजम् ।
भयङ्करं[१] प्रतिभयं[२] भीमं[३] भीष्मं[४] भयानकम्[५] ॥२१६॥
भीषणं[६] भैरवं[७] घोरं[८] दारुणं[९] च भयावहम् ।
जुगुप्सा[१] तु घृणा[२]ऽथ स्याद् विस्मय[१]श्चित्र[२] मद्भुतम्[३] ॥२१७॥
चोद्य[४(२)]-माश्चर्य[५] शमः[१] शान्तिः[२] शमथो[३]-पशमा[४] वपि ।
तृष्णाक्षयः[५] स्थायिनोऽमी रसानां कारणं क्रमात् ॥२१८॥
स्तम्भो[१] जाड्यं[२] स्वेदो[१] घर्मो[२] निदाघो[३] पुलकः[१] पुनः[(३)] ।
रोमाञ्चः[२] कण्टको[३] रोमविकारो[४] रोमहर्षणम् ॥२१९॥
रोमोद्गम[६] उद्धुषण[७(४)] मुल्लकसन[८] मित्यपि ।
स्वरभेद[१]स्तु कल्लत्वं स्वरे कम्प[१]स्तु[(५)] वेपथुः[२] ॥२२०॥
वैवर्ण्यं[१] कालिका[२]ऽथाश्रु[१] बाष्पो[२]नेत्राम्बु[३] रोदनम्[४] ।
अस्र[५] मन्यु[६(६)] प्रलय[१]स्त्वचेष्टते त्यष्टसात्त्विकाः ॥२२१॥
धृतिः[१] सन्तोषः[२] स्वास्थ्यं[३] स्यादाध्यानं[१] स्मरणं[२] स्मृतिः[३] ।
मति[१]र्मनीषा[२] बुद्धि[३] र्धी[४] र्धिषणा[५]-ज्ञप्ति[६]-चेतनाः[७] ॥२२२॥
प्रतिभा[८]-प्रतिप[९]त्प्रज्ञा[१०]-प्रेक्षा[११]-चिदु[१२]-पलब्धयः[१३] ।
संवित्तिः[१४] शेमुषी[१५] दृष्टिः[१६(७)] सा मेधा[१] धारणक्षमा ॥२२३॥

---

(१) भीतिः स्त्री, दरः पुंक्लीं, भिया इति स मक्प्रत्ययान्तत्वादाबन्तः ।
(२) चोद्यम् इति वा पाठः ।
(३) पुलकः पुंक्लीं, कण्टकोऽपि पुंक्लीं ।
(४) उद्धर्षणा इति वा उल्लसनक इति वा पाठः ।
(५) स्वरकम्प इत्येकं वा नाम, वेपथुः पुं ।
(६) अश्रु क्लीं, अस्रु इति वा पाठः । बाष्पः पुंक्लीं, ।
(७) चित् स्त्री, या मति धारणक्षमा धारणसमर्था मेधा इत्युच्यते ।

प्रज्ञा[१] तत्त्वानुगा मोक्षे ज्ञानं[१] विज्ञान[१] मन्यतः (१) ।
शुश्रूषा[१] श्रवणं[२] चैव ग्रहणं[३] धारणं[४] तथा ॥२२४॥
ऊहो[५]ऽपोहो[६]ऽर्थविज्ञानं[७] तत्त्वज्ञानं[८] च धीगुणाः ॥
(२)व्रीडा[१] लज्जा[२] मन्दाक्षं[३] ह्री[४] स्त्रपा[५] सा ऽपत्रपा[१]ऽन्यतः॥२२५
जाड्यं[१] मौर्ख्यं[२] विषादो[१]ऽवसादः[२] सादो[३] विषण्णता[४] ।
मदो[१] मुन्मोदसम्मोदौ(३) व्याधि स्या धी रुजाकरः ॥२२६॥
निद्रा[१] प्रमीला[२] शयनं[३] संवेश[४]-स्वाप[५]-संलयाः[६] ।
(४)नन्दीमुखी[७] श्वासहेति[८]स्तन्द्रा[९] सुप्तं[१]तु साऽधिका॥२२७
औत्सुक्यं[१] रणरणको[२]-त्कण्ठे[३] आयल्लका[४]-ऽरती(५) ।
हृल्लेखो[६]-त्कलिके[७] चा थावहित्था[१] (६)ऽकारगोपनम्[२](७) ॥
शङ्का[१] ऽनिष्टोत्प्रेक्षणं(८) स्या च्चापलं त्व नवस्थितिः[२] ।
आलस्यं[१] तन्द्रा[२] कौसीद्यं[३] हर्ष[१] श्चित्तप्रसन्नता[२] ॥२२८॥
आह्लादः[३] प्रमोदः[४] प्रमदो[५]-मु[६]-त्प्रीत्या[७]-मोद[८]-सम्मदाः[९]।

---

"मतिरागामिका प्रोक्ता बुद्धिस्तत्कालदर्शिनी । प्रज्ञा चातीतकालस्य मेधा कालत्रयात्मिका" इत्यन्ये भिदन्ति ।

(१) अन्यत इति मोक्षशास्त्रादन्यत्र शिल्पे चित्रादौ च या मति निपुणायते तदेकं नाम विज्ञानम् ।

(२) चत्वारि रूदस्येत्यन्ये, त्रीणीत्यन्ये, स्त्रीति स्त्रीलिङ्गम् ।

(३) तन्मते सम्मोदौ इति पाठः । आधिर्मनः पीडा व्याधिरुच्यते त्यन्वयः ।

(४) "अविकारोऽद्भुतं मत्तं प्राणिस्थं स्वाङ्गमुच्यते" इति स्वाङ्गलक्षणात् ङीबद्वयम्, नन्दीमुखापि आवन्तो गङ्गावत् ।

(५) अरती स्त्री ।

(६) क्लीबेऽवहित्थं कुलवत्, वस्तुतस्तु स्त्रीलिङ्गी ।

(७) आकारस्य भ्रूविकार मुखरागादे र्गोपनम् आच्छादनम् ।

(८) अनिष्टस्योत्प्रेक्षणं सम्भावनमित्यर्थः ।

आनन्दा[१०]-नन्दथू[११](१) गर्व्व[१]स्त्व हङ्कारो[२] ऽवलिप्तता[३] ॥२२०॥
दर्प्पो[४] ऽभिमानो[५](२) ममता[६] मान[७] श्चित्तोन्नतिः[८] स्मयः[९] ।
स मिथो ऽहमहमिका[१] या तु सम्भावना त्मनि(३) ॥२२१॥
दर्प्पा त्सा ऽऽहोपुरुषिका[१] स्या दहम्पूर्व्विका[१] पुनः(४) ।
अहं पूर्व्व महं पूर्व्वमित्यु ग्रत्वं[१] तु चपलता[२] ॥२२२॥
प्रबोध[१] स्तु विनिद्रत्वं[२] ग्लानि(५) स्तु बलहीनता ।
दैन्यं[१] कार्प्पण्य[२] श्रम[१] स्तु क्लमः[२] क्लेशः[३] परिश्रमः[४] ॥२२३॥
प्रयासा[५]-यास[६]व्यायामा[७] उन्माद[१] श्चित्तविभ्रमः[२] ।
(६)मोहो[१] मौढ्यं[२] चिन्ता[१] ध्यान[२] ममर्षः[१] क्रोधसम्भवः ॥२२४॥
गुणो जिगीषो[१] त्साहवां स्त्रास स्त्वाकस्मिकं भयम् ।
अपस्मारः[१] स्या दावेशो निर्वेदः[१] स्वावमाननम् ॥२२५॥
आवेग[१] स्तु त्वरि[२] स्तूर्णिः[३] संवेगः[४] सम्भ्रम[५] स्त्वरा[६] ।

---

(१) मुतमन्दः स्त्री, आनन्दथुः पुं ।

(२) अभिमानः पुंक्ली, वैजयन्तीकारस्तु "अभिमानस्त्वहङ्कारो गर्वो-ऽस्त्री"त्याह ।

(३) अहो अहं पुरुषः इति दर्पात् अहङ्कारात् या आत्मनि स्वविषये सम्भावना सा आहो पुरुषिका, "यत्र श्लाघाभिनिवेश स्ता माहो पुरुषिकां विदुः" यत्तौन्द्र्यंवहरी आह "पुरस्तादात्मनः पुरमथितराहो पुरुषिका" ।

(४) अहं पूर्व्वं इति यस्यां क्रियायां सर्व्वे भवते साऽहंपूर्व्विका ।

(५) ग्लानिः स्त्री ।

(६) मोहो मूर्च्छा अविद्या च यन्महेश्वरः "मोहस्तु मूर्च्छाया मविद्यायां च दृश्यते" इति । मूर्च्छायां यथा "अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता" अविद्या विपर्यय ज्ञानं यथा "न मुह्यामः कामानहह गहनो मोहमहिमा" ।

वितर्क:[1](१) स्यात् दूहनम्[2] परामर्श:[3] विमर्शनम् ॥२२६॥
अध्याहार:[4] तर्क:[5] ऊह:[6] ऽसूया[1] न्यगुणादूषणम्।
मृति:[1] संस्था[2](२) मृत्यु[3]-कालौ[4] परलोकगमो[5] ऽत्यय:[6]॥२२७॥
पञ्चत्वं[7] निधनं[8] ऽनाशो[9] दीर्घनिद्रा[10] निमीलनम्।
दिष्टान्तो[11] ऽस्तं[12] कालधर्मो[13] ऽवसानं वा तु सर्वगा॥२२८॥
(३)मरको[1] मारि:[2] त्वथस्थित्यं इमी व्यभिचारिण:।
स्यु: कारणानि कार्याणि सहचारीणि यानि च ॥२२९॥
रत्यादे: स्थायिनो लोके तानि चेत् काव्य नाट्ययो:।
विभावा[1] अनुभावा[2] च व्यभिचारिण[3](४) एव च ॥२३०॥

---

(१) तर्कि: स्त्री, तर्कणिरपि स्त्री, वितर्क: पुं, वैजयन्ती कारस्तु "वितर्क तर्कमस्त्रिया" मित्याह।

(२) संस्थ: संस्था इत्येवं स्त्रीपुं। सं पूर्व स्थाधातो र्मरणार्थकत्वात् प्रमादाय प्रवृत्ति निमित्तता बोध्या। निधनं पुंक्ली।

(३) मरक: पुंक्ली, मारि: स्त्री।

(४) विविध माभिमुख्येन चरन्तीति व्यभिचारिणो भावा उच्यन्ते, स्यात् रति: रागोऽनुरागोऽनुरतिरित्यादिनवविधस्य स्थायीभावस्य लोके यानि कारणानि कारणभूतानि आलम्बनोद्दीपनस्वभावानि ललनोद्यानादीनि स्यु: तानि काव्यनाट्यके: काव्ये नाट्ये च विभावा उच्यन्ते, रागादि नवविधस्थायिभावस्य कारणानाम् आलम्बनोद्दीपनस्वभावानां ललनाद्यानादीनां नाम काव्यशास्त्रे नाट्यशास्त्रे च विभाव इत्यर्थ:। च पुन: एवं कार्याणि कार्यभूतानि कटाक्षभुजाक्षेपादीनि अनुभावा उच्यन्ते. रागादि नवविधस्थायिभावस्य कारणभूतानामालम्बनोद्दीपन-स्वभावानां ललनादीनां कार्यभूतकटाक्षभुजाक्षेपादीनां नाम अनुभाव इत्यर्थ:। व्यक्त: प्रकट: सभास्थितानां लोकानां वासनारूपेण स्थित: स स्थायी रस: शृङ्गारादि भवेत् विभावै:१ अनुभावै:२ सात्विकै:३ व्यभिचारिभि:४ चतुर्भि: स्थायी भावो रस: कथ्यत इत्यर्थ:।

व्यक्तः स तैर्विभावाद्यैः स्थायीभावो भवेद्रसः[१] ।
पात्राणि[१] नाट्ये ऽधिकृता स्तत्तद्वेष स्तु भूमिका[१] ॥२४१॥
शैलूषो[१] भरतः[२] सर्व्ववेषी[३(१)] भरतपुत्रकः[४] ।
धर्म्मीपुत्रो[५(२)] रङ्ग-जाया-जीवो[७] रङ्गावतारकः[८] ॥२४२॥
[(३)]नटः[९] कृशाश्वी[१०] शैलाली[११] चारणास्तु[१] कुशीलवाः[२] ।
भ्र-भ्रु-भ्रू-भ-परः कुंसो[४(४)] नटः स्त्रीवेषधारकः ॥२४३॥
वेश्याचार्य्यः[१] पीठमर्द्दः[२] सूत्रधार[१] स्तु सूचकः ।
नन्दी[१] तु पाठको नान्द्याः[(५)] पार्श्वस्थः[१] पारिपार्श्विकः[२] ॥
[(६)]वासन्तिकः[१] केलिकिलो[२] वैहासिको[३] विदूषकः[४] ।
प्रहासी[५] प्रीतिदश्[६] चाथ पिङ्गः[१] पल्लविको[२] विटः[३(७)] ॥२४४॥
पिता त्वावुक[१] आवुत्त[१]-भावुकौ[२] भगिनीपतौ ।

(१) सर्व्ववेशी इति पाठः ।

(२) धार्म्मीपुत्रः इति वा, रङ्गजायाभ्यामाजीवः, रङ्गाजीवः१ जायाजीवः२ ।

(३) नटः पुंक्लीं, कृशाश्वीति इन्नन्तः शैलाली णिन्नन्तः ।

(४) भ्रकुंसः१ भ्रुकुंसः२ भ्रूकुंसः३ भकुंसः४ इति ।

(५) नान्द्याः पूर्व्वरङ्गाङ्गस्य द्वादशतूर्य्यघोषनाम्नः पाठकोऽध्यापको नन्दीत्युच्यते, नन्दिनौ नन्दिन इत्यादि रूपाणि । नन्दशब्दात् प्रत्यये णि नान्दी स्त्रीलिङ्गः, नान्द्यौ नान्द्य इति । भम्भा१ मड्डु२ मद्दल३ करडम्ब४ झल्लरि५ हुडुक्क६ कंसाल७ काहल८ तिलिमा९ वंशो१० शङ्खो११ पणवो१२ यनाडए१२ नन्दी१ इति नाटकनान्दीयम् । ढक्का१ ढक्का२ डमरुय३ काहल४ वुक्क५ भेरी६ भाषाणं७ पटहो८ जगझम्प९ करडि१० पुगगयमद्दल११ कंसाल१२ रणनान्दी२ इति रणनान्दीयम् ॥

(६) क्रीडनीयक पाठस्य ।

(७) विटः पुंक्लीं, अतःपरं यावत्काण्डसमाप्ति नान्योक्ताधिकारः ।

भावो[1] विद्वान् युवराजः कुमारो[1] भर्तृदारकः[2] ॥२४६॥
बाला वासू[1] मार्ष[1] आर्यो[2] देवो[1] भट्टारको[2] नृपः ।
राष्ट्रियो[1] नृपतेः स्यालो दुहिता भर्तृदारिका[1] ॥२४७॥
देवी[1] कृताभिषेकान्या भट्टिनी[1](1) गणिकाऽज्जुका[2] ।
नीचा-चेटी-सखी-हूतौ हण्डे[1] हञ्जे[1] हलाः[1] क्रमात्(2) ॥
अब्रह्मण्य[1] मवध्योक्तौ ज्यायसी तु स्वसाऽत्तिका[1](3) ।
भर्त्ता ऽर्य्य पुत्रो[1] माता ऽम्बा[1] भदन्ताः[1] सौगतादयः ॥२४९॥
पूज्ये[1] तत्रभवा[2] नत्रभवां[3] श्च भगवा[4] नपि ।
पादा[1] भट्टारको[2] देवः[3] प्रयोज्यः पूज्यनामतः(4) ॥२५०॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्ता-
मणौ नाममालायां देवकाण्डो द्वितीयः ॥

---

(1) यन्महेश्वरः "भट्टिनी द्विजभार्य्यायां नाट्योक्तौ राजयोषिति" ।

(2) एषां त्रयाणां सम्बोधनत्वादन्ये ऽन्यानि रूपाणि न स्युः "अथो-त्थाय सखीनां सा प्रेष्या लक्ष्याद्रिगोऽखिलाः । अदर्शयत् कराग्रेण हलाः पश्यत पश्यत इति" तिलकाचार्य्यः । एवं हला इत्यस्य एकवचनबहुवच-नोदाहरणम् ॥

(3) अत्तेव मातेव इत्[illegible]क ।

(4) पूज्यनामतः सर्व्वे प्रोक्ताः, भट्टारकस्य ।

# मर्त्यकाण्डः।

तृतीयः।

मर्त्यः[१] पञ्चजनो[२] भूस्पृक्[३] पुरुषः[४] पूरुषो[५] नरः[६]।
मनुष्यो[७] मानुषो[८] ना[९] विट्[१०] मनुजो[११] मानवः[१२] पुमान्[१३] ॥१॥
बालः[१] पाकः[२] शिशु[३] डिंभः[४] पोतः[५] शावः[६] स्तनन्धयः[७]।
पृथुका[८]-र्भ[९]-स्तनपायाः[१०] क्षीरकण्ठः[११] कुमारकः[१२] ॥२॥
शिशुत्वं[१] शैशवं[२] बाल्यं[३] वयस्थस्तरुणो[२] युवा[३]।
तारुण्यं[१] यौवनं[२(१)] वृद्धः[१] प्रवयाः[२] स्थविरो[३] जरन्[४] ॥३॥
(२)जरी[५] जीर्णो[६] यातयामो[७] जीनो[८]ऽथ विस्रसा[१] जरा[२]।
वार्द्धकं[१] स्थाविरं[२] ज्यायान्[१] वर्षीयान्[२] दशमी[३] त्वपि(३) ॥४॥
विद्वान्[१] सुधीः[२] कवि[३]-विचक्षण[४]-लब्धवर्णा[५] ज्ञः[६]
प्राप्तरूप[७]-कृति[८]-कृष्ट्य[९]-भिरूप[१०]-धीराः[११]।
मेधावि[१२]-कोविद[१३]-विशारद[१४]-सूरि[१५]-दोषज्ञाः[१६]
प्राज्ञ[१७]-पण्डित[१८]-मनीषि[१९]-बुध[२०]-प्रबुद्धाः[२१] ॥४॥
व्यक्तो[२२] विपश्चित्[२३] संख्यावान्[२४] सन्[२५] प्रवीणे तु शिक्षितः[१]।
निष्णातो[२] निपुणो[४] दक्षः[५] कर्म्म[६]-हस्त[७]-मुखाः[८] कृतात्[८(४)] ॥६॥

(१) यौवनशब्दः पुं क्ली।

(२) जरी जरिणौ जरिणः इति रूपाणि।

(३) अतिवृद्धस्य, दशमिनौ दशमिनः॥

(४) कृतकर्म्मा कृतकर्म्माणौ कृतकर्म्माणः कृतहस्तः, कृतमुखः, इत्यादि।

कुशल[९] श्चतुरो[१०] ऽभिज्ञ[११]-विज्ञ[१२] वैज्ञानिकाः[१३] पटुः[१४] ।
छेको[१] विदग्धे प्रौढ[१] स्तु प्रगल्भः[२] प्रतिभान्वितः[२] (१) ॥७॥
कुशाग्रीयमतिः[१] सूक्ष्मदर्शी[२] तत्कालधीः[१] पुनः ।
प्रत्युत्पन्नमति[२] र्दूरदर्शी दीर्घदर्श्यसौ ॥८॥
हृदयालुः[१] सहृदय[२] श्चिद्रूपो[३](२) ऽथ संस्कृते[१] ।
व्युत्पन्न[२]-प्रहत[३]-क्षुण्णा[४](३) अन्तर्वाणि[१](४) स्तु शास्त्रवित् ॥९॥
(५) वागीशो[१] वाक्पति[२] र्वाग्मी[३] (६) वाचोयुक्तिपटुः[२] प्रवाक्[३] ।
समुखो[४] वावदूको[५] ऽथ वदो[१] वक्ता[२] वदावदः[३] ॥१०॥
स्याज्जल्पाक[१] स्तु वाचालो[२] वाचाटो[३] बहुगर्ह्यवाक् ।
(७) अवदो[१] ऽनक्षरो[२]-दुर्वाक्[१] कद्वदे[२] स्यादयाथरः[१] ॥११॥
(८) हीनवादि[२] न्येडमूका[१]-नेडमूकौ[२] त्ववाक्श्रुतौ ।
रवणः[१] शब्दन[२] स्तुल्यौ कुवाद[१]-कुचरौ[२] समौ ॥१२॥

---

(१) प्रतिभामुखः इति वा पाठः ॥

(२) बोधिः वस्तुतत्त्वज्ञानवतः ।

(३) व्युत्पत्तिः शास्त्रादितत्त्व चतुरस्य ।

(४) शास्त्रं वेत्ति न च तथा वक्तुं शक्नोति यः सोऽन्तर्वाणिः ॥

(५) इयं प्रधानवक्तुः वागीशः वाक्पतिः वाग्मी इति बोधि, प्रशा-गित्येकं, समुखः वावदूक इति द्वे इति मतान्तरम् ।

(६) पञ्च प्रतिभायुक्तवल्गकस्य, वाग्मीत्यत्र गकारद्वयं पठनीयम् प्रशस्या वागस्यास्तीति ग्मिन् प्रत्ययः, तेन गकारद्वय श्रवणम् । यदि तु ग्मिनि त्येवं च्यते तर्हि यरोऽनुनासिकः स्यात् प्रत्यये नित्यमिष्यत इति, यो हि वाग्मिभाषते स वाग्मीत्येव भवतीति कण्ठभट्टः, वाग्मी-ग्मीति वाग्मी ग्मिनो यस्य कृत्वा कार्य चपाठव इति गः, गत्वग्मिना वक्तोच्चारणे गकार द्वय श्रवणं भवतीति च माधवभट्टः ।

(७) अनूतरे इति वा, तस्मिंते पश्चादुत्तरदातृनोम ।

(८) हीनं स्वपराजयं वक्तीति विग्रहः ।

लोहलो[१]ऽस्फुटवाग्[२] मूको[१]ऽवाग्[२] सौम्यस्वरो[१]ऽस्वरः[२] ।
वेदिता[१] विदुरो[२] विन्दु[३] र्वन्दारु[१] स्त्वभिवादकः[२] ॥१३॥
आशंसु[१] राशंसितरि[२] कद्वर[१](१) स्त्वतिकुत्सितः ।
निराकरिष्णुः[१] क्षिप्नुः[२](२) स्याद्विकासी[१] तु विकस्वरः[२] ॥१४॥
दुर्मुखे[१] मुखरा[२]-बद्धमुखौ[३] शक्लः[१] प्रियंवदः[२] ।
दानशीलः स वदान्यो[१] वदन्यो ऽप्यथ बालिशः[१] ॥१५॥
मूढो[२] मन्दो[३] यथाजातो[४] बालो[५] मातृमुखो[६] जडः[७] ।
मूर्खो[८]ऽमेधा[९]-विवर्णा[१०]-ज्ञा[११]वैधेयो[१२]मातृशासितः[१३]॥१६॥
देवानांप्रिय[१४]-जाल्मौ[१५] च (३)दीर्घसूत्र[१] श्चिरक्रियः[२] ।
मन्दः क्रियासु कुण्ठः स्यात् क्रियावान्[१] कर्म्मसूद्यतः ॥१७॥
कर्म्मक्षमो[१] ऽलङ्कर्म्मीणः[२] कर्म्मशूर स्तु कर्म्मठः[२] ।
कर्म्मशीलः[१] कार्म्मि[२] आयःशूलिक[१] स्तीक्ष्णकर्म्मकृत् ॥१८॥
सिंहसंहननः[१] स्वङ्गः[२] स्वतन्त्रो[१] निरवग्रहः[२] ।
यथाकामी[३] स्वरुचि[४] च स्वच्छन्दः[५] स्वै[६] र्यपावृतः[७] ॥१९॥
यदृच्छा[१] स्वैरिता[२] स्वेच्छा[३] नाथवान्[१] निघ्न[२]-गृह्यकौ[३] ।
तन्त्रा[४]-यत्त[५]-वशा[६]-धीन[७]-च्छन्द[८]-वन्त[९] परात्परे(४)॥२
॥

(१) कद्वरः कद्वद इति वा पाठः ।

(२) क्षिप्नुः इति वा पाठः ।

(३) दीर्घसूत्र अकारान्तो, देववत् दीर्घसूत्री इत्यपि व्यञ्जनान्तो णिन् प्रत्ययान्तत्वात् यदाह हलायुधः "दीर्घसूत्री जडक्रियः" इति दीर्घं सूत्रयतीत्येवं शीलो दीर्घसूत्री इति तट्टीका, "सूत्रण् विमोचने" विमोचनं मोचनाभावो ग्रन्थनमिति यावत् इति धातुपारायणम् ॥

(४) परतन्त्र १ परायत्तः २ परवशः ३ पराधीन ४ परच्छन्दः ५ परवान् ६ ।

लक्ष्मीवान्[1] लक्ष्मणः[2] श्रील[3] इभ्य[1] आढ्यो[2] धनी[3] श्वरः[4] ।
ऋद्धे[5] विभूतिः[1] सम्पत्ति[2] र्लक्ष्मीः[3] श्री[4]-ऋद्धि[5]-सम्पदः ॥२१॥
दरिद्रो[1] दुर्विधो[2] दुःस्थो[3] दुर्गतो[4] निःस्व[5]-कीकटौ[6] ।
अकिञ्चनो[7] ऽधिप[1] ईशो[2] नेता[3] परिवृढो[4] ऽधिभूः[5](1) ॥२२॥
पती[6]-न्द्र[7]-स्वामि[8]-नाथा[9]-र्य्याः[10] प्रभु[11] र्भर्त्ते[12] श्वरो[13] विभुः[14]
ईशिते[15] नो[16] नायकश्च[17] नियोज्यः[1] परिचारकः[2] ।२३॥
डिङ्गरः[3] किङ्करो[4] भृत्य[5] श्चेटो[6] गोप्यः[7] पराचितः[8] ।
दासः[9] प्रेष्यः[10](2) परिस्कन्दो[11] भुजिष्य[12]-परिकर्म्मिणौ[13] ॥२४॥
परान्नः[14] परपिण्डादः[15] परजातः[16] परैधितः[17] ।
भृतको[1] भृतिभुग्[2] वैतनिकः[3] कर्म्मकरो[4] ऽपि च ॥२५॥
स निर्भृतिः(3) कर्म्मकारो भृतिः[1] स्यान्निष्क्रयः[2] पणः[3] ।
कर्म्मण्या[4] वेतनं[5] मूल्यं[6] निर्वेशो[7] भरणं[8] विधा[9] ॥२६॥
भर्म्मण्या[10] भर्म्म[11] भृत्या[12] च भोग स्तु गणिकाभृतिः ।
खलपूः[1] स्याद् बहुकरो[2] भारवाह स्तु भारिकः[2] ॥२७॥
वार्त्तावहो वैवधिको[2] भारो विवध[2]-वीवधौ[3] ।
काचः शिक्यं[2] तदालम्बो भारयष्टि र्विहङ्गिका ॥२८॥
शूर[1] श्चारभटो[2] वीरो[3] विक्रान्त[4] श्चाथ कातरः ।
दरित[2] श्चकितो[3] भीतो[4] भीरु[5]-भीरुका[6]-भीलुकाः[7] ॥२९॥
विह्वल-व्याकुलौ[2] व्यग्रे[3] कान्दिशीको[1] भयद्रुते ।
उत्पिञ्जल-समुत्पिञ्ज[2]-पिञ्जला-भृशमाकुले ॥३०॥

(1) अधिप इति वा पाठः ।

(2) इषि गति हिंसा दर्शनेषु आत्मनेपदिः श्वादिश्च, अस्मात् ण्यति गुरूपधत्वात् गुणाभावे इष्य इति रूपम्, तस्मिन् परे सति गुण एव भवति पररूपानुपातित्वाद्वृद्धेरप्रसङ्गात् प्रेष्यः इति ॥

(3) निर्भृत्या मूल्येन रहितः स निर्भृतिः ।

महेच्छे[1] तूद्भटो[2]-दारो[3]-दात्तो[4]-दीर्ण[5]-महाशयाः[6] ।
महामना[7] महात्मा[8] च कृपणा[1] स्तु मितम्पचः[2] ॥२१॥
कीनाश[3] (1)स्तद्दनः[4] क्षुद्र[5]-कदर्य्य[6]-दृढमुष्टयः[7] ।
किम्पचानो[8] दयालु[1] स्तु कृपालुः[2] कारुणापरः[3] ॥२२॥
सूरतो[4]ऽथ दया[1] शूकः[2] कारुण्यं[3] करुणा[4] घृणा[5] ।
कृपा[6]ऽनुकम्पा[7]ऽनुक्रोशो[8] हिंस्रो[1] शरारु[2]-घातुकौ ॥२३॥

व्यापादनं[1] विशरणं[2] प्रमयः[3] प्रमापणं[4]
निर्ग्रन्थनं[5] प्रमथनं[6] कदनं[7] निबर्हणम्[8] ।
निस्तर्हणं[9] विशसनं[10] क्षणनं[11] परासनं[12]
प्रोज्जासनं[13] प्रशमनं[14] प्रतिघातनं[15] वधः[16] ॥२४॥
प्रवासनो[17]-द्वासन[18]-घात[19]-निर्वा-
सनानि[20] संज्ञप्ति[21]-निशुम्भ[22]-हिंसाः[23] ।
निर्वापणा[24]-लम्भ[25]-निसूदनानि[26]
निर्यातनो[27]-न्मथ्य[28]-समापनानि[29] ॥२५॥
अपासनं[30] वर्ज्जन[31]-मार[32]-पिञ्जा[33]
निष्कारण[34](2)-क्राथ[35]-विशारणानि[36] ।
स्युः कर्त्तने[1] कल्पन[2]-वर्द्धने च
छेद[4] स्व घातोद्यत आततायी[1] ॥२६॥

[illegible] शीर्षच्छेदिकः[1] शीर्षच्छेद्यो[2](3) यो वधमर्हति ।
तत्र[1]-मरणोपसम्पन्नः[2] परेत[3]-प्रेत[4]-संस्थिताः[5](4) ॥२

(१) तद्दन इति वा पाठः ।
(२) विकारण इति वा पाठः ।
(३) शीर्षच्छेदकः इति वा पाठः ।
(४) संपूर्व स्थाधातो र्मरणार्थता मादायैतन्निष्पन्नम् ।

(१)नामालेख्य-यशः-शेषो[८] व्यापन्नो[९]-पगतो[१०](२) मृतः[११] ।
परासुः[१२] स्यादूर्द्ध्वदानं(३) तदर्थं मौर्द्ध्वदेहिकम्[१] ॥३८॥
मृतस्नानमपस्नानं[१] निवापः[१] पितृतर्पणम् ।
चिति[१]-चित्या[२]-चिता[३] स्तुल्या ऋजु[१]स्तु प्राञ्जलो[२]ऽञ्जसः[३] ॥
दक्षिणो[१] सरलो[२]-दारौ[३] शठ[१]स्तु निकृतो[२]ऽनृजुः[३] ।
क्रूरो[१] नृशंस[२]-निस्त्रिंश[३]-पापा[४] धूर्त्त[१]स्तु वञ्चकः[२] ॥४०॥
व्यंसकः[३] कुहको[४] दाण्डाजिनिको[५] मायि[६]-जालिकौ[७] ।
(४)माया[१] तु शठता[२] शाठ्यं[३] कुसृति[४]र्निकृति[५]श्च सा(५) ॥४१॥
कपटं[१] (६)कैतवं दम्भः[३](७) कूटं[४] छद्मो[५]पधि[६]श्छलम्[७] ।
व्यपदेशो[८] मिषं[९] लक्षं[१०] निभं[११] व्याजो[१२]ऽथ कुसृतिः[१] ॥४२॥
कुहना[२] दम्भचर्या[३] च वञ्चनं[१] तु प्रतारणम् ।
व्यलीक[३]मतिसन्धानं[४](८)साधुः[१] सभ्या[२]-र्य[३]-सज्जनाः[४] ॥४३॥
(९)दोषैकदृक्[१] पुरोभागी[२] कर्णेजप[१]स्तु दुर्जनः[२] ।
पिशुनः[३] सूचको[४] नीचो[५] द्विजिह्वो[६] मत्सरी[७] खलः[८] ॥४४॥

---

(१) नामशेषः आलेख्यशेषः२ यशःशेषः३।

(२) अपगतो इति वा पाठः ।

(३) तस्य मृतस्य ऊर्द्ध्वदेहमस्मिन् तदर्थे ।

(४) मायादयः कपटादयश्च एकार्था इत्येके, "कपटादयः सप्त व्यपदेशादयश्च पञ्च भिन्नार्था" इत्यमरः तदा कपटादयः सप्त कपटवाचकाः तत्रापि च वेष-भाषा विपर्य्ययकरणं कपटं, कार्षापण तुलादेः परवञ्चनार्थं न्यूनाधिककरणं कूटमिति विशेषोनाम्नितः ।

(५) निष्कृतिरिति केचित् ।

(६) कपटं पुंक्ली, कूटं पुंक्ली, छद्मन् पुंक्ली, छद्म, छद्मनी, छद्मान ।

(७) ऽभिसन्धानम् इति वा ।

(८) दोषग्राहिणः, पुरोभागिनौ पुरोभागिनः । इत्यन्तो बोद्धव्याः।

व्यसनार्त्त[1]स्तूपरक्त[2]श्चौर[1]स्तु प्रतिरोधकः[2] ।
दस्युः[3] (१)पाटच्चर[4]स्तेन[5]स्तस्करः[6] पारिपन्थिकः[7] ॥४५॥
परिमोषि[8]-परास्कन्द्यै[9](२) कागारिक[10] मलिम्लुचाः[11] ।
यः पश्यतो हरेद्‌द्रव्यं स चोरः पश्यतोहरः[1] ॥४६॥
चौर्य्यं[1] तु चौरिका[2] स्तेयं[3] (३)लोप्त्रं[1] (४)त्वपहृतं धनम् ।
यङ्गविध्यो[1] दैवपरो[2]ऽथालस्यः[1] शीतको[2]ऽलसः[3] ॥४७॥
मन्द[4]स्तुन्दपरिमृजो[5]ऽनुष्णो[6] दक्ष[1]स्तु पेशलः[2] ।
पटू[3]-ष्णो[4]-ष्णक[5]-सूत्थान[6]-चतुरा[7] स्त्वथ तत्परः[1] ॥४८॥
आसक्तः[2] प्रवणः[3] प्रह्वः[4] प्रसित[5]श्च परायणः[6] ।
दाता[1] दारः[2] स्थूललक्ष्य[1]-दानशौण्डौ[2] बहुप्रदे[3] ॥४९॥
दान[1]मुत्सर्जनं[2] त्यागः[3] प्रदेशन[4]-विसर्ज्जने[5] ।
विहायितं[6](५) वितरणं[7] स्पर्शनं[8] प्रतिपादनम्[9] ॥५०॥
विश्राणनं[10] निर्वपण[11]मपवर्ज्जनं[12] मंहति[13] ।
अर्थव्ययज्ञः सुकलो[1] याचक[1]स्तु वनीपकः[2](६) ॥५१॥
मार्गणो[3]ऽर्थी[4] याचनक[5]स्तर्कुको[6]ऽथार्दना[1] मणा[2](७)
अर्हना[3] प्रणयो[4] याच्ञा[5] याचना[6]ऽध्येषणा[7] सनिः[8] ॥५२॥

---

(१) पटच्चर इत्यपि ।

(२) परास्कन्दी परास्कन्दिनौ परास्कन्दिनः ।

(३) स्तेनस्य भावस्तेयं, स्तेनाद्य लुक् चेति यः, राजादित्वाद्यञि चौर्य्यमपि ।

(४) लोप्रमित्यपि हलायुध टीका ।

(५) विहापितम् इति वा पाठः ।

(६) वनीयक इति क्वचित् ।

(७) तर्कुकः इति वा पाठः ॥

(८) अर्दनेत्याद्यष्टसु प्रणयः पुंसि, अन्ये स्त्रियां। सनिशब्दः पुंस्यपि।

उत्पतिष्णु[१]रुत्पतिता[२]ऽलङ्करिष्णु[१]स्तु मण्डनः[२]।
भविष्णु[१]र्भविता[२] भूष्णुः समौ वर्त्तिष्णु[१]वर्त्तनौ[२]॥५२॥
(१)विसृत्वरो[१] विसृमरः[२] प्रसारी[३] च विसारिणि[४]।
लज्जाशीलो[१]ऽपत्रपिष्णुः[२] सहिष्णुः[१] क्षमिता[२] क्षमी[३]॥५३॥
तितिक्षुः[४] सहनः[५] क्षन्ता[६] तितिक्षा[१] सहनं[२] क्षमा[३]।
ईर्ष्यालुः[१] कुहनो[२] क्षान्ति[१]रीर्ष्या[२] क्रोधी[१] तु रोषणः[२]॥५५॥
अमर्षणः[३] क्रोधन[४]श्च चण्ड[१]स्त्वत्यन्तकोपनः।
बुभुक्षितः[१] स्यात् क्षुधितो[२] जिघत्सु[३]रशनायितः[४]॥५६४॥
बुभुक्षा क्षुदशनाया[१] जिघत्सा[२] रोचको[४] (२)रुचिः[५]।
पिपासुः[१] स्तृषित[२] स्तृष्णक्[३](३) तृष्णा तर्षो[२]ऽपलाषिका[३]॥७
पिपासा[४] तृट्[५] तृषो[६] दन्या[७] पीतिः[८] पाने[९]ऽथ शोषणम्[१]।
रसादानं[२] भक्षक[१]स्तु घस्मरो[२]ऽद्मर[३] आशितः[४](४)॥५८॥
भक्त[१]मन्नं[२] कूर[३]मन्धो[४](५) भिस्सा[५] स्त्री दीदिवि[६]रोदनः[७]।
अशनं[८](६) जीवनकं[९] च याजो[१०] वाजः[११] प्रसादनम्[१२]॥५९
भिस्सटा[१] दग्धिका[२] सर्व्वरसाग्रं मण्ड[१] मतं तु(७)।
दधिजे मस्तु भक्तोत्थे निःस्रावा[१]-चाम-मासराः[२]॥६०॥

---

(१) प्रसरणशीलस्य।

(२) रोचनं रोचतेऽस्मिन्निति वा रोचकः नाम्नि पुंसि चेति।

(३) तृष्णक् तृष्णजौ तृष्णजः॥

(४) आशितम् इति वा पाठः।

(५) कूरमिति पुंक्लीं, अन्धः अन्धसी अन्धांसि।

(६) अशनं पुंक्लीं, अशनं अशनः॥

(७) मण्डं पुंक्लीं, मस्तु क्लीं, "दध्नस्तु यदधस्तोयं तन्मस्तु च निगद्यते" इति धन्वन्तरिः॥ सर्व्वरसाग्र्यं इति वा पाठः।

श्राणा[1] विलेपी[2] तरला[3] यवागू[4] उष्णिका[5]ऽपि च ।
सूपः[1] स्यात् प्रहितं[2] सूदो[3] व्यञ्जनं[1] तु घृतादिकम् ॥६१॥
तुल्यौ तिलान्ने कृसर[1]-त्रिसरा[2](1) वथ पिष्टकः[1](2) ।
पूपो[2]ऽपूपः[3] पूलिका[1] तु पोलिका[2]-पोलि[3](3)-पूपिकाः[4] ॥६२
(4)पूपल्य[5] ये[6] घृतपक्वे स्युरभ्यूषा[1]-भ्योष[2]-पौलयः[3] ।
(5)निष्ठानं[1] तु तेमनं[2] स्यात्करम्भो[1] दधिसक्तवः ॥६३॥
घृतपूरो[1] घृतवरः[2] पिष्टपूर[3]श्च घार्त्तिकः[4] ।
(6)चमसी[1] पिष्टवर्त्तिः[2] स्याद्वटक[1]स्त्ववसेकिमः[2] ॥६४॥
भृष्टायवाः पुनर्धाना[1](7) धानाचूर्णं तु सक्तवः[1](8) ।

---

(1) कृसरः पुंस्त्री, क्लीबेऽपि, वैजयन्ती यदाह "तिलतण्डुलमाषैस्तु कृसरास्त्रिसरास्त्रयीति" ॥ (2) पिष्टकः पुंक्लीं ॥

(3) पोलि इति वा, "किञ्चित् स्थूलाभवेयुश्च ताभ्यः पूपलिकाः स्मृताः । सैवाङ्गारेषु सम्पक्वा विज्ञेयाङ्गार-कर्कटी" पूलिकाद्याः पञ्च स्थूल भक्ष्यपर्य्यायाः ॥

(4) इह प्रस्तावात् सामान्यतोऽनुक्तान्यपि पिष्टनामानि त्रीणि, पिष्टकः१ चमसः२ चूर्णश्च३ "पिष्टको नेत्ररोगे स्याद्धान्यादि चमसेऽपि चेति" महेश्वरः । चमसशब्दस्तु चमसीत्यत्र निर्द्दिष्टोऽतस्तत एवावसेयः ।

(5) निष्ठानं पुंक्लीं ।

(6) चमसी स्त्रीलिङ्गः, गौड़स्तु "चमसः पिष्टवर्त्तिः स्यादिति" पुमाह, चमसः पिष्टं चमसी मुद्गादिपिष्टमतः इति हेमोणादि हैमधातुपारायणयोः सामान्यवचनात् चमसीशब्दो वडोत्यादि प्रसिद्धेऽपि "स्थूलो चमसी मसीति" अमरस्त्रीलिङ्गशेषः चमसीमसूरादिपिष्टमाहेति क्षीरस्वामी ॥

(7) धानाः स्त्रीलिङ्गो बहुवचनान्तश्च ।

(8) सक्तुः पुंक्लीं ।

पिच्छिलं[1] तु विजिविलं[2] विज्जलं[3] विजिलं[4](1) च तत् ।
भावितं[1] तु वासितं[2] स्यात् तुल्ये समृष्ट[1]-शोधिते[2] ॥ ७८॥
काञ्चिकं[1] काञ्जिकं[2] धान्याम्ला[3]-रनाले[4] तुषोदकम्[5] ।
कुल्माषाभिषुता[6](2)-वन्तिसोम[7]-शुक्तानि[8] कुञ्जलम्[9] ॥ ७९॥
चुक्रं[10] धातुघ्न[11] मन्ताक्षं[12] रक्षोघ्नं[13] कुण्डगोलकम्[14] ।
महारसं[15] सुवीराम्लं[16] सौवीरं[17] म्रक्षणं[1](3) पुनः ॥ ८०॥
तैलं[2] स्नेहो[3](4) ऽभ्यञ्जनं[4] च वेसवारः[1] उपस्करः[2] ।
स्या त्तिन्तिडीकं[1] तु चुक्रं[2] वृक्षाम्लं[3] चाम्लवेतसे[4] ॥ ८१॥
हरिद्रा[1] काञ्चनी[2] पीता[3] निशाख्या[4] वरवर्णिनी[5] ।
क्षवः[1] क्षुताभिजननो[2] राजिका[3] राजसर्षपः[4] ॥ ८२॥
आसुरी[5] कृष्णिका[6] चासौ कुस्तुम्बुरु[1] तु धान्यकम्[2] ।
धन्या[3](5) धन्याकं[4] धान्याकं[5] मरिचं[1](6) कृष्णं[2] मूषणम्[3] ॥ ८३॥
कोलकं[4] वेल्लजं[5] धर्मपत्तनं[6] यवनप्रियम्[7] ।
शुण्ठी[1] महौषधं[2](7) विश्वा[3](8) नागरं[4] विश्वभेषजम्[5] ॥ ८४॥
वैदेही[1] पिप्पली[2] कृष्णा[3] उपकुल्या[4] मागधी[5] कणा[6] ।
तन्मूलं ग्रन्थिकं[1] सर्वग्रन्थिकं[2] चटकाशिरः[3] ॥ ८५॥
त्रिकटु[1] त्र्यूषणं[2] व्योषं[3] मजाजी[1](9) जीरकः[2] कणा[3] ।
सहस्रवेधि[1] वाल्हीकं[2] जतुकं[3](10) हिङ्गु[4] रामठम्[5] ॥ ८६॥

---

(१) विच्छिलं विजिलं-विज्जलविजलमतौ वा ।

(२) कुल्माषे यवादिभिः स्वैश्विन्नैरभिषूयते परिवास्यते स्म कुल्माषाभिषुतं व्यस्तमपि तेन कुल्माषमभिषुतं चेति ।

(३) म्रक्ष म्लेच्छने चुरादिः परस्मैपदी, म्रक्षणं म्रक्षणमाटीव रोगे इत्येके ।

(४) स्नेहः पुंक्लीं, स्नेहः स्नेहम् ।

(५) धन्या आमलको स्त्रीलिङ्गः ।

(६) मरीचं इत्यपि ।

(७) विश्वा स्त्रीक्लीं विश्वा विश्वम् ।

(१) पुंक्लीं ।

(९) जीरकः पुंक्ली, जातुकं क्लीपुं ॥

न्यादः[१] स्वदनं[२] खादनं[३] मग्नं[४]
निघसो[५] वल्भनं[६] मभ्यवहारः[७] ।
जग्धि[८] र्घसना[९]-भक्षणा[१०]-लेहाः[११]
प्रत्यवसानं[१२] घसि[१३] राहारः[१४] ॥८७॥

ध्माना[१५]-वष्वाणा[१६]-विष्वाणा[१७] भोजनं[१८] जेमना[१९]-दने[२०] ।
चर्वणं[१] चूर्णनं दन्तै र्जिह्वास्वाद स्तु लेहनम् ॥८८॥
वाल्यवर्त्तः[१] प्रातराशः[२] सग्धि[१] स्तु सहभोजनम्[(१)] ॥
ग्रासो[१] गुडेरकः[२(२)] पिण्डो[३] गडोलः[४] कवको[५] गुडः[६] ॥८९
गाण्डोलः[७(३)] कवल[८] स्तृप्ते[१] राघ्रात[२(४)]-सुहित[३]-ध्रिताः
तृप्तिः[१] सौहित्य[२] माघ्राण[३(५)] मथ भुक्तसमुज्झिते[१(६)] ॥९०
फेला[२] पिण्डोलि[३] फेली[४] च स्वोदरं पूरके पुनः ।
कुक्षिम्भरि[१] रात्मम्भरि[२] रुदरम्भरि[३] रप्यथ ॥९१॥
आद्यूनः[१] स्यादौदरिको[२] विजिगीषाविवर्ज्जिते[(७)] ।
उदरपिशाचः[१] सर्व्वान्नीनः[२] सर्व्वान्नभक्षकः[३] ॥९२॥
शाष्कुलः[१] पिशिताशु[२] र्न्यादिष्णु[१] स्तून्मादसंयुतः ।
गृध्नु[१] स्तु गर्द्धन स्तृष्णक्[३] लिप्सु[४] र्लुब्धो[५]ऽभिलाषुकः[६] ॥९३
लोलुपो[७] लोलुभो[८] लोभ[१] स्तृष्णा[२] लिप्सा[३] वशः[४] स्पृहा[५] ।
काङ्क्षा[६] शंसा[७] गर्द्ध[८] वाञ्छा[९] शी[१०] रिच्छे[११] हा[१२] तृट्[१३] मनोरथाः[१४]
कामो[१५(८)] ऽभिलाषो[१६] ऽभिध्या[१] तु परस्वेहा ह्वतः[१] पुनः ।
अविनीतो[२] विनीत[१] स्तु निभृतः[२] प्रसृतो[३]ऽपि च ॥९५॥

---

(१) सन्धि स्त्री । (२) पिण्डः पुंक्लो । (३) कवलः पुंक्लो ।
(४) आघ्रातः इति वा । (५) आघ्राण इति वा ।
(६) भुक्तोच्छिष्टम् उच्छिष्टं चान्न ॥
(७) विजेतु मिच्छा विजिगीषा तया विवर्जिते तस्मिन् ।
(८) अभिलापः पुंक्लो ।

(१)विधेये विनयस्थः[2] स्यादा(२)श्रवो[1(3)] वचनेस्थितः।
वश्यः[1] प्रणेयो[2] धृष्टस्तु[1] वियातो[2] धृष्णु-धृष्णजौ[4] ॥९६॥
वीच्चापन्नो[1(4)] विलक्षो[2]ऽथा ऽधृष्टो[1] शालीन[2]-शारदौ[3]।
(५)शुभंयुः[1] शुभसंयुक्तः स्या दहंयु[1] रहङ्कृतः[2] ॥९७॥
कामुकः[1] कमिता[2] कान्तो[3] ऽनुकः[4] कामयिता[5] ऽभिकः[6]।
कामनः[7] कमरो[8] ऽभीकः[9(6)] पञ्चभद्र[1]स्तु विप्लुतः[2] ॥९८
व्यसनी[3(7)] हर्षमाण[1]स्तु प्रमना[2] हृष्टमानसः[3]।
विकुर्व्वाणो[4] विचेता[1]स्तु दु-रन्त-र्व्वि-परो मनाः[4(8)] ॥९९
मत्तो[1] शौण्डो[2]-त्कट[3]-क्षीवा[4] उत्क[1]स्तूत्सुक[2] उन्मनाः[3]।
उत्कण्ठितो[4] ऽभिशस्तो[1] तु वाच्य[2]-क्षारित[3]-दूषिताः[4] ॥१००
गुणैः प्रतीते(९) स्यात्कृतलक्षणः[1] आहतलक्षणः[2]।
निर्लक्षण[2]स्तु पाण्डुरपृष्ठः सङ्कसुको[1] ऽस्थिरे[2(10)] ॥१०१।

---

(१) श्रयगतौ क्तप्रत्ययेऽनुस्वारे स्यादेट् "तस्यैवमेऽनुरक्तस्य प्रश्रितस्य हतैनस" इति भागवतम्। प्रश्रितस्य विनीतस्येति तट्टीका।

(२) आज्ञाकारिणः विधेयो विनयस्थश्च नामद्वयम्॥

(३) आश्रवाः इति वा श्रवणाओ इति वा।

(४) वीक्ष्यशब्दोऽन्तस्थाद्यमोऽन्तस्थाद्य रहितोपि अतो वीक्ष्यापन्नः वीचापन्न इत्युभयं भवति "वीक्ष्यापन्नः सविस्मय" इति हारावली॥

(५) शुभं योऽपीति हलायुध टीका।

(६) कमनोऽभीकः इति वा पाठः।  (७) दुःखितः।

(८) दुर्म्मनाः१ अन्तर्म्मनाः२ विमनाः३ दुर्म्मनसौ विचेतसौ उन्मनसौ इत्यादि।

(९) प्रख्याते इत्यर्थः, आहतलक्षणः षट्कारकखण्डे नाम "इक्ष्वाकुवंश्यः ककुदं नृपाणां काकुत्स्थ इत्याहतलक्षणोऽभूदिति" रघुः।

(१०) संकुचिकोऽ इति वा, अनिश्चिते इति क्षीरस्वामी।

सध्र्यञ्चति तु सध्र्यङ्[1] स्या त्तिर्यङ्[1] पुन स्तिरो ञ्चति ॥१०८॥
शंशयालुः[1] संशयिता[2] गृहयालु[1] र्ग्रहीतरि[2 (1)]।
पतयालुः[1] पातुकः[2] स्या त्समौ रोचिष्णु[1] रोचनौ[2 (2)] ॥१०९॥
दक्षिणार्ह[1] स्तु दक्षिण्यो[2 (3)] दक्षिणीयो[3] ऽथ दण्डितः[1]।
दापितः[2] साधितो[3] ऽर्च्य[1] स्तु प्रतीक्ष्यः[2] पूजितो ऽर्हितः[3] ॥११०॥
नमस्यितो[3] नमसितो[4]-ऽपचितो[5] ऽञ्चितो[6] ऽर्च्चितः।
पूजा[1] ऽर्हणा[2] सपर्य्या[3] ऽर्चा[4] उपहार[1]-बली[2] समौ[(4)] ॥१११॥
विक्लवो[1] विह्वलः[2] स्थूलः[1] पीवा[2 (5)] पीन[3] श्च पीवरः[4 (6)]।
चक्षुष्यः[1] सुभगो[2] द्वेष्यो[1] ऽक्षिगतो[2 (7)] ऽथांसलो[1] बली ॥११२॥
निर्द्दिग्धो[3] मांसलो[4] ऽप्युपचितो[5] ऽथ दुर्बलः[1] कृशः[2]।
क्षामः[3] क्षीण[4] स्तनु[5] श्छात[6] स्तलिना[7]-मांस[8]-पेलवाः[8] ॥११३॥

---

विष्वद्रीची, यन्माघः "विष्वद्रीची विविपन् सैन्यवीचीः" ॥ पूजायां न-मादौ विष्वद्र्यञ्चः विष्वयूञ्चा। विष्वयञ्च्यामित्यादि। स्त्रियां विष्वयूञ्ची नदीवत्। क्लीवेपि विष्वयग् विष्वयूक् विष्वद्रीचि विष्वद्र्यञ्चि। विष्वग् इति सर्वतोऽर्थेऽव्ययम् अञ्चते रञ्चायां नलोपः यू नागमश्च अर्च्चायां नलोपाभावः एवमन्येतमेष्वपि द्रष्टव्यम्। देवमञ्चति गच्छति अर्च्चति वा देवद्र्यङ्। सहाञ्चति गच्छत्यर्च्चति वा सध्र्यङ्। तिर्य्यगञ्चतीति गच्छतीति तिर्य्यङ् ॥

(१) ग्रहीतरि इति वा। (२) रोचिनौ इत्यपि।

(३) दक्षिण्यो दक्षिणी ॥

(४) "कुर्व्वन्नमन्थ्याबलिपटहतां शूलिनि श्लाघनीयामिति" कालिदासः, "उपहारो बलिः स्मृत" इति हलायुधः। देवार्थे निहितनैवेद्य इति तट्टीका, बलीति पुंस्त्री, बलिः बलीतिरूपम् ॥

(४) पीयानौ पीवानः ॥

(५) हष्टिसुखदमियस्य हे। (६) दृष्टिदुःखद अप्रियस्यापि हे।

पिचण्डिलो[1] बृहत्कुक्षि[2] स्तुन्दि[3]-तुन्दिक[4]-तुन्दिलाः[5] ।
उदर्य्यु[6] दरिले[7] विखु[1]-विखु[2]-विग्रा[3]- अनासिके ॥११४॥
नतनासिके ऽवनाटो[1] ऽवटीटो[2] ऽवभ्रटो[3] ऽपि च।
(१)खरणा[1] स्तु खरणसो[2] नः क्षुद्रः[1] क्षुद्रनासिकः(२) ॥११५॥
खुरणाः(३) स्यात् खुरणस[2] उन्नस[1] स्तु ग्रनासिकः ।
पङ्गुः[1] श्रोणः[2] खलति[1] स्तु खल्वाट[2] ऐन्द्रलुप्तिकः[3] ॥११६॥
शिपिविष्टो[4] बभ्रु[5] रथ(४) काणः[1] काणन[2] एकदृग्[3] ।
पृश्नि[1] रल्पतनौ[2] कुब्जो[1] गडुलः[2] कुकरे[1] कुणिः[2] ॥११७॥
निखर्व्वः[1] खट्टनः[2](५) खर्व्व[3] खर्व्वशाख[4] स्च वामनः[5] ।
(६)प्रकर्म्मा[1] एडो[2] बधिरो[3] दुश्चर्म्मा[1] तु छिन्नग्नकः[2] ॥११८॥
षण्ड[3] श्च शिपिविष्ट[4] श्च खोड[1]-खोरौ[2] तु खञ्जके[3] ।
विकलाङ्ग[1] स्तु पोगण्ड[2] ऊर्द्ध्वज्ञु[1] रूर्द्ध्वजानुकः[2] ॥११९॥
(७)ऊर्द्ध्वज्ञु[2] र्वा प्यथ प्रज्ञु[1](८) प्रज्ञौ[2] (९)विरलजानुके ।

(१) खरणसौ खरणसः । (२) क्षुद्राऽल्पानासिकाऽस्य विग्रहः।
(३) खुरणसौ खुरणसः इत्यादि । (४) वभ्रुरथ इत्येकं पदं वा ।
(५) "खट्टम् सम्वरणे" खट्टयति खट्टनः। खट्टतः इति वा पाठः ।
(६) असंपूर्णत्वात् निन्दितं शेफाग्रस्य चर्म्म अस्य दुश्चर्म्मा, अग्र-सिद्धत्वात् निराच्छादनत्वाच्च छिन्नो छिन्नग्नकः, षण्डतेपि धत्ते षण्डः वण्डश्च इति वा ।
(७) ऊर्द्ध्वज्ञुरित्यपि, यन्माघेकादशसर्गः "परिशिथिलित कर्णग्रीव-मामीलिताक्षः ·क्षणमयमनुभूय स्वप्नमूर्द्ध्वज्ञुरेव रिरसयिषति भूयः शष्प-मग्रे विकीर्णं पटतर चपलौष्ठं प्रस्फुरत्प्रोथमश्वः ॥"
(८) प्रगते प्रह्वे प्रगते प्रकृष्टे जानुनी अस्य, प्रज्ञुः प्रज्ञः इति दर्श-नात् प्रज्ञजाक्राद्या अप्युच्यन्ते ॥
(९) विरले वातादिदोषात् जानुनी अस्य विरल जानुकस्तस्मिन् ।

संज्ञु[1]-संज्ञौ[2] युतजानौ वलिनो[1] वलिभः[2] समौ ॥१२०॥
उदग्रदन्[1(1)] दन्तुरः[2] स्यात् प्रलम्बाण्ड[1]स्तु मुष्करः[2] ।
अन्धो[1] गताक्ष[2] उत्पश्य[1] उन्मुखो[2]ऽधोमुख[1]स्त्ववाङ्[(2)] ॥१२१॥
मुण्ड[1]स्तु मुण्डितः[2] केशी[1(3)] केशवः[2] केशिको[3]ऽपि च ।
वलिरः[1] केकरो[2] वृद्धनाभौ[1] तुण्डिल[2]तुण्डिभौ[3] ॥१२२॥
आमयाव्य[1]पटु[2]र्ग्लानो[3] ग्लास्नु[4]र्विकृत[5] आतुरः[6] ।
व्याधितो[7]ऽभ्यमितो[8]ऽभ्यान्तो[9] दद्रुरोगी[1] तु (4)दद्रुणः[2] ॥१२३॥
पामनः[1] कच्छुर[2]स्तुल्यौ सातिसारो[1]ऽतिसारकी ।
वातकी[1] वातरोगी[2] स्यात् श्लेष्मलः[1] श्लेष्मणः[2] कफी[3] ॥१२४॥
क्लिन्ननेत्रे[1] चिल्ल[2]चुल्लौ[3] पिल्लो[4]ऽप्यथार्शोयु[1]गर्शसः[2] ।
मूर्च्छिते[1] मूर्त्त मूर्च्छालौ[3] सिध्मल[1]स्तु किलासिनि[2] ॥१२५॥
पित्तं[1] मायुः[2] कफः[1] श्लेष्मा[2] बलाशः[3] स्नेहभूः[4] खटः[5] ।
रोगो[1] रुजा[2] रुगा[3]तङ्को[4] मान्द्य[5]व्याधि[6]रपाटवम्[7] ॥१२६॥
आम[8] आमय[9] आकल्य[10]-मुपतापो[11] गदः[12] समाः ।
क्षयः[1] शोषो[2] राजयक्ष्मा[3] यक्ष्मा[4]ऽथ क्षुत्[1(5)] क्षुतं[2] क्षवः[3] ॥१२७॥
कास[1]स्तु क्षवथुः[2] पामा[1(6)] खसः[2] कच्छू[3]र्विचर्चिका[4] ।

(१) उदग्र दन्तौ उदग्र दन्तः इत्यादि ॥ (२) अवाञ्चौ अवाञ्चः इत्यादि रूपम् ॥ (३) केशी इत्यन्तः बलातिशयं वक्रदृष्टेः ॥

(४) दीर्यतेऽनया इति दद्रूः क्षुद्रभेदः "दद्रुविदारणी" इति दद्रूरिति हे रोगार्त्ति, सा अस्त्यस्य दद्रुणः पामादी पलालीदद्रौ ह्रस्वश्चेति न प्रत्ययः, एतौ द्वौ स्त्रीलिङ्गौ दद्रु दद्रुशब्दौ, दद्रुरोगी ॥

(५) स्त्री, क्षुतौ क्षवः ॥

(६) पामा इत्यान्तोऽपि गङ्गाधरस्तु "पामनामे विचर्चिका" इत्यमरः क्षवथुः इति वा पाठः ॥

कण्डूः[1] कण्डूयनं[2] खर्जूः[3] कच्छूवा[4]ऽथ क्षतं[1] व्रणः[2] ॥१२८॥
(१) अरु[3] रीर्मं[4] प्रणाम्नु[5] स रूढ़ व्रणपदं किणः[1]।
श्लीपदं[1] पादवल्मीकः[2] पादस्फोटो[1] विपादिका[2] ॥१२९॥
स्फोटकः[1] पिटको[2] गण्डः[3] पृष्ठग्रन्थिः[1] पुनर्गडुः[2](२) ।
श्वित्रं[1] स्यात् पाण्डुरं[2] कुष्ठं[1] केशघ्नं[1] त्विन्द्रलुप्तकम्[2] ॥१३०॥
सिध्म[1](३) किलासं[2] त्वक्पुष्पं[3] सिध्मं[4](४) कोठ[1]स्तु मण्डलम्[2]
गलगण्डो[1] गण्डमाला[2] रोहिणी[1] तु गलाङ्कुरः[2] ॥१३१॥
हिक्का[1] हेक्का[2] च हृल्लासः[3] प्रतिश्याय[1]स्तु पीनसः[2] ।
शोथ[1]स्तु(५) श्वयथुः[2] शोफो[3] दुर्ना[1]मार्शो[2] गुदाङ्कुरः[3] ॥१३२॥
छर्दिः[1] प्रच्छर्दिका[2](६) छर्दि[3]र्वमथु[4]र्वमनं[5] वमिः[6]।
गुल्मः[1] स्यादुदरग्रन्थि[2]र्गुदावर्तो[1] गुदग्रहः[2] ॥१३३॥
गति[1]र्नाडीव्रणो[2] वृद्धिः[1] कुरण्ड[2](७)श्चाण्डवर्द्धने ।
अश्मरी[1] स्यान् मूत्रकृच्छ्रं[2] प्रमेहो[1] बहुमूत्रता ॥१३४॥
(८) अनाह[1]स्तु विबन्धः[2] स्याद् ग्रहणीरुक्[1] प्रवाहिका[2] ।

---

(१) अरुः व्यञ्जन दन्त्यान्तः अरुषी अरूंषि, वैजयन्तीकारस्तु "व्रणो-ऽर्मोऽर्मोऽपि न स्त्रियां" इति पुंस्यप्याह नाड़ीव्रणः पुमानित्यमरः ॥

(२) पङ्कोपि,गडुः पुं ॥ (३) क्ली,सिध्मनी सिध्मानि,नान्तः सिध्म ॥

(४) अथ मकारान्तः, सिध्मे सिध्मानि । मण्डलं त्रिषु ॥

(५) शोथोऽस्त्रीति वैजयन्ती तस्मात् क्लीवेऽपि, श्वयथुः पुं, दुर्नाम्नी दुर्नामनी दुर्नामानि,नान्तः क्ली, अर्शसी अर्शांसि,सान्तः ॥

(६) स्त्री क्ली, छर्द्दिः प्रच्छर्दिका इति वा पाठः, छर्द्दिः स्त्री, वमथुः पुं, वमिः स्त्री, गुल्मः पुं स्त्री ॥

(७) कुकुण्डः इति वा पाठः ।

(८) इयं कोष्ठबन्धस्य । आमाहस्तु निबन्धः स्यादिति पाठोऽपि ॥

व्याधिप्रभेदो विद्रधि-(१)र्भगन्दर[२]-ज्वरा[३]-दयः ॥१३५॥

दोषज्ञ[१]स्तु (२)भिषग्[२] वैद्य[३] आयुर्वेदी[४] चिकित्सकः[५] ।

रोगहार्य्य[६] गदङ्कारो[७] भेषजं[१] तन्त्र[२] मौषधम्[३] ॥१३६॥

भैषज्य[४]मगदो[५] जायु[६] (३)श्चिकित्सा[१] रुक्प्रतिक्रिया[२] ।

उपचर्य्या[३]-पचारौ[४] च (४) लङ्घनं[१]त्वपतर्पणम्[२] ॥१३७॥

जाङ्गुलिको[१] विषभिषक् स्वास्थ्ये[१] वार्त्त[२] मनामयम्[३] ।

सह्या[४]-रोग्ये[५] पटू[१]-ल्लाघ[२]-वार्त्त[३]-कल्या[४] स्तु नीरुजि[५] ॥१२८

कुसृत्या विभवान्वेषी पार्श्वकः[१] सन्धिजीवकः[२] ।

सत्कृत्यालङ्कृतां कन्यङ्कयो ददाति स कूकुदः[१] ॥१२९॥

चपल[१]श्चिकुरो[२] नीलीराग[१]स्तु (५)स्थिरसौहृदः ।

ततो हरिद्रारागो[१]ऽन्यः सान्द्रस्निग्धस्तु मेदुरः[२]॥१३०॥

(६)गेहेनर्दी[१] गेहेशूर[२] पिण्डीशूरो[३] ऽस्तिमान्[१] धनी[२] ।

स्वस्थानस्थः परद्वेषी गोष्ठश्वो[१]ऽथा पदिस्थितः ॥१४१॥

आपन्नो[१]ऽथाप[१]द्विपत्ति[२] र्विपत्[३] स्निग्ध[१]स्तु वत्सलः[२] ।

उपाध्य[१]-भ्यागारिकौ[२] तु कुटुम्बव्यापृते नरि ॥१४२॥

जैवातृक[१]स्तु दीर्घायु[२]स्त्वामदायी तु शङ्कुरः[१] ।

अभिपन्नः[१] शरणार्थी कारणिकः[१] परीक्षकः[२] ॥१४३॥

समर्द्धुक[१]स्तु वरदो[२] व्रातीनाः[१] सङ्घजीविनः[२] ।

---

(१)एकैकम् विद्रधिः स्त्री । (२) भिषग्भिषजौ भिषजः औषधं पुं क्लो॥

(३) जायुः पुं ॥ (४) उपचारोपचार्य्यौ च इति वा पाठः॥

(५)"नीलीरागः स विज्ञेयः स्थिरप्रेमा च यः पुमानिति" हलायुधः।

(६) गेहेनर्दिनौ गेहेनर्दिनः इत्यादि ॥

(७) अस्तिमन्तौ अस्तिमन्तः अल्पधनवतः ॥

सभ्याः[1] सदस्याः[2] पार्षद्याः[3] सभास्ताराः[4] सभासदः[5] ॥१४४
सामाजिकाः[6] सभा[1] संसत्[2] समाजः[3] परिष[4] त्सदः[5](1) ।
पर्ष[6]-त्समज्या[7]-गोष्ठ्या[8]-स्था[9] आस्थानं[10] समिति[11] र्घटा ॥१४५
सांवत्सरो[1] ज्यौतिषिको[2] मौहूर्त्तिको[3] निमित्तवित्[4] ।
दैवज्ञ[5]-गणका[6]-देष्टि[7]-ज्ञानि[8]-कार्त्तान्तिका अपि ॥१४६॥
विप्रश्निके[10]-क्षणिकौ[11] च सैद्धान्तिक[1] स्तु तान्त्रिकः[2] ।
लेखके[1] ऽक्षरपूर्व्वाः स्यु(2)श्चणा[2]-जीवक[3] चुञ्चवः[4] ॥१४७॥
वार्णिको[5](3) लिपिकर[6] श्चाक्षरन्यासे लिपि[1] र्लिविः[2](4) ।
मषिधानं[1] मषिकूपी[2] मलिनाम्बु[1] मषी[2] मसी[3](5) ॥१४८॥
कुलिक[1] स्तु कुलश्रेष्ठी[2] सभिको[1] द्यूतकारकः[2] ।
कितवो[1] द्यूतकृद्[2] धूर्त्तो[3] ऽक्षधूर्त्त[4] श्चाक्षदेविनि[5] ॥१४९॥
(6)दुरोदरं[1] कैतवं[2] च द्यूत[3] मक्षवती[4] पणः[5] ।
पाशकः[1] प्रासको[2](7) ऽक्ष[3]श्च देवन[4] स्तत्पणो ग्लहः[2](8) ॥१५०॥
अष्टापदः[1] शारिफलं[2] शारः[1] शारि[2] श्च खेलनी[2](9) ।
परिणाय[1] स्तु शारीणां नयनं स्यात् समन्ततः ॥१५१॥

---

(1) स्त्री क्ली, सदः सदसी सदसः। स्त्री। सदः सदसी सदांसि इति क्ली ॥
(2) अक्षरचणः १ अक्षरजीवकः २ अक्षरचुञ्चुः ३ अक्षर चञ्चुरित्यपि ॥
(3) वर्णिकः इति वा पाठः ॥
(4) इह ग्रन्थाभावादनुक्तान्यपि लेखनी नामानि त्रीणि लेखनी ललन्तिका कलमश्च तथा च हारावली "लेखनी ललन्तिका" इति ॥
(5) मसी नामानि त्रीणि । (6) दुरोदरं कैतवञ्च पुं क्ली ॥
(7) प्रासकः असु क्षेपणे दिवादिः ॥
(8) तत्तेषु अक्षेषु पणो बन्धो जय्यत्वेन स्थापितं धनमित्यर्थः ॥
(9) पुं क्ली, गुटिकाया नाम त्रीणि ॥

समाह्वयः[1] प्राणिद्यूतं व्यालग्राह्या[1]हि तुण्डिकः[2] ।
स्यान्मनोजवसः[1](1) ताततुल्यः शास्ता[1](2) तु देशकः[2] ॥३५२
सुकृती[1] पुण्यवान्[2] धन्यो[3] मितद्रु[1] र्मितवत्सलः ।
क्षेमङ्करो[1] रिष्टतातिः[2] शिवतातिः[3] शिवङ्करः[4] ॥३५३॥
श्रद्धालु[1] रास्तिकः[2] श्राद्धो[3] नास्तिक[1] स्तद्विपर्य्यये ।
वैरङ्गिको[1] विरागार्हो[2] वीतदम्भ[1] स्त्व कल्कनः[2] ॥३५४॥
प्रणाय्यो[1] ऽसम्मतो[2] ऽन्वेष्टा[1](3) ऽनुपद्यथ सहः[1] क्षमः[2] ।
शक्तः[3] प्रभूष्णु[4](4) र्भूतात्त[1] स्त्वाविष्टः[2] शिथिलः[1] श्लथः[2] ॥३५५॥
संवाहको[1] ऽङ्गमर्दः[2] स्यान्नष्टबीज[1] स्तु निष्कलः[2] ।
आसीन[1] उपविष्टः[2] स्यादूर्द्ध[1] ऊर्द्धन्दमः[2] स्थितः[3] ॥३५६॥
अध्वनीनो[1] ऽध्वगो[2] ऽध्वन्यः[3] पान्थः[4] पथिक[5]-देशिकौ[6] ।
प्रवासी[7] तद्गणो हारिः[1](5) पाथेयं[1] शम्बलं[2] समे ॥३५७॥
जङ्घालो[1] ऽतिजवो[2] जङ्घाकरिको[1] जाङ्घिको[2] जवी[1](6) ।
जवन[2] स्त्वरिते[2] वेगो[1] रयो[2] रंह[3] स्तरः[4] स्यद[5] ॥३५८॥
जवो[6] वाजः[7] प्रसर[8] श्च(7) मन्दगामी[1] तु मन्थरः[2](8) ।
कामङ्गाम्य[1] नुकामीनो[2] ऽत्यन्तीनो[1] ऽत्यन्तगामिनि[2] ॥३५९॥

---

(१) मनोजवसस्तुरगसरोयमित्यन्ये यदाहुः "जनः पितृसधर्म्मा यः सत्तातार्हो मनोजव" इति ॥ (२) शास्तारौ शास्तारः । देशिकोऽपि ॥

(३) अन्वेष्टारौ अन्वेष्टारः। अनुपदी अनुपदिनौ अनुपदिनः॥

(४) समर्थस्य चत्वारि । (५) हारिः स्त्री । शम्बलं पुंक्ली ॥

(६) जविनौ जविनः ॥

(७ प्रसरान्तानि वेगनामानि तत्र, रंहसी रंहांसि तरसी तरांसि ॥

(८) मन्दगामिनिद्वयम् ॥

सहायोऽभिचरो[२]ऽनो स्व जीवि[३]-गामि[४]-चर[५]-प्लवाः[६](१)।
सेवको[७]ऽथ सेवा[१] भक्तिः[२] परिचर्य्या[३] प्रसादनं[४] ॥१६०॥
शुश्रूषा[५]-राधना[६]-पास्ति[७]-वरिवस्या[८]-परीष्टयः[९] ।
उपचारः[१०] पदाति[१] स्तु पत्तिः[२] पद्गः[३] पदातिकः[४] ॥१६१॥
पादातिकः[५] पादचारी[६] पदाजि[७]-पदिका[८] अपि ॥
सरः[२] पुरो-ऽग्रतो-ऽग्रेभ्यः पुरस्तो गम[४] गामि[५]गाः[६](२) ॥१६२॥
प्रष्ठो[७]ऽथा वेशिका[१]-गन्तू[२] प्राघुणो[३](३) ऽभ्यागतो[४] ऽतिथिः[५]।
प्राघूर्णको[६](४) ऽथा वेशिक[१] मातिथ्यं चातिथेय्य[३] पि(५) ॥१६३॥
सूर्य्योढ[१] स्तु स सम्प्राप्तो यः सूर्य्येऽस्तङ्गते ऽतिथिः ।
पादार्थं पाद्य[१] मर्घार्थ मर्घ्यं[१] वार्घ्य च गौरवम् ॥१६४॥
अभ्युत्थानं[२] व्यथक[१] स्तु स्यान्मर्मस्पृग[२] रुन्तुदः[३] ।
ग्रामेयके[१] तु ग्रामीण[२] ग्राम्यौ[३] लोको[१] जनः[२] प्रजा[३]॥१६५॥
स्यादा मुष्यायणो[१] ऽमुष्यपुत्रः[२] प्रख्यातवप्रकः[३]।
कुल्यः[१] कुलीनो[२] ऽभिजातः[३] कौलेयक[४] महाकुलौ[५]॥१६६॥
जात्यो[६] गोत्रं[१] तु सन्तानो[२] ऽन्ववयो[३] ऽभिजनः[४] कुलम्[५]।
अन्वयो[६] जननं[७] वंशः[८] स्त्री[१] नारी[२] वनिता[३] वधूः[४]॥१६७॥
वशा[५] सीमन्तिनी[६] वामा[७] पणिणी[८] महिला[९](६) ऽबला[१०] ।
योषा[११] योषित्[१२] विशेषा स्तु (७) कान्ता[१] भीरु[२] नितम्बिनी[३]॥

---

(१) अनुजीवी १ अनुगामी २ अनुचरः ३ अनुप्लवः ४ ॥

(२) पुरःसरः १ अग्रतः सरः २ अग्रेसरः ३ पुरोगमः १ पुरोगामी २ पुरोगः ३ । (३) प्राघूर्ण इति वा । (४) प्राघुर्णिको इति वा ॥

(५) आतिथ्ये वीति स्त्री क्लीं, आतिथेयि इति क्लीवे रूपम् ॥

(६) महेलामपि । (७) एकैकम् बोध्यम् ॥

प्रमदा[४] सुन्दरी[५] रामा[६] रमणी[७] ललना[८]ऽङ्गना[९] ।
स्वगुणेनोपमानेन मनोज्ञादिपदेन च ॥१६८॥
विशेषिता-ङ्ग-कर्म्मा स्त्री यथा तरललोचना[१](१) ।
अलसेक्षणा[२] (२)मृगाक्षी[३] मत्तेभगमना[४]ऽपि च ॥१७०॥
वामाक्षी[५] सुस्मिता[६]ऽस्याः स्वं मान[१]-लीला[२]-स्मरा[३]-दयः(३) ।
लीला[१] विलासो[२] विच्छित्ति[३] र्विव्वोकः[४] किलिकिञ्चितम्[५] ॥१७१
मोट्टायितं[६] कुट्टमितं[७] ललितं[८] विहृतं[९] तथा ।
विभ्रम[१०] श्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश(४) ॥१७२॥

---

(१) स्वकीयेनासाधारणेन गुणेन यथा तरललोचना अलसेक्षणा इत्यत्र तरलत्वं लोचनस्यासाधारणम्, अलसं मीक्षणं यस्याः अत्र क्रियायाः असाधारणम्, उपमानं यथा मृगाक्षी मत्तेभगमना, मनोज्ञादि पदेन यथा, वामे मनोज्ञे अक्षिणी यस्याः आदिशब्दात् सुस्मितादयः अत्र शोभनत्वे तस्मिन् क्रियायाः विशेषणम् ॥ स्त्रीविशेषणमेकैकम् ॥

(२) तरललोचना इत्यत्र लोचनस्य तरलत्व गुणो विशेषणम् अलसेक्षणा इत्यत्र ईक्षणा क्रियायाः अलसत्व गुणः विशेषणम् । मृगाक्षीत्यत्र अक्ष्णः उपमानं मत्तेभगमनेत्यत्र गमनक्रियायाः उपमानम् । वामाक्षीत्यत्र अक्ष्णः वामत्वं मनोज्ञत्वं विशेषणं सुस्मितेत्यत्र स्मितक्रियायाः शोभनत्वं विशेषणम् । एवं स्वगुणेन विशेषिताङ्गा तरललोचना । स्वगुणेन विशेषितकर्म्मा अलसेक्षणा । उपमानेन विशेषिताङ्गा मृगाक्षी । उपमानेन विशेषितकर्म्मा मत्तेभगमना । मनोज्ञपदेन विशेषिताङ्गा वामाक्षी । मनोज्ञपदेन विशेषितकर्म्मा सुस्मिता ।

(३) अस्याः स्त्रीयाः मानोऽभिमानः लीला शृङ्गार चेष्टाविशेषः स्मरः कामः ॥

(४) लीलाद्या एकैकं, स्त्रीणां स्वाभाविका लीलाद्या दशालङ्काराः तेषां लक्षणानि ॥ "प्रियस्यानुकृति र्लीलाश्लिष्टा मागेष चेष्टितैः (१)

(1)प्रागल्भ्यौ[1]-दार्य्य[2]-माधुर्य्य[3]-शोभा[4]-धीरत्व[5]-कान्तयः[6] ।
दीप्ति[7]श्चा यत्नजा भाव[1]-हाव[2]-हेला[3]स्त्रयो ऽङ्गजाः(2)॥१७२॥
सा कोपना भामिनी[1] स्यात् छेकामत्ता च वाणिनी(3) ।
कन्या[1] कनी[2] कुमारी[3] च गौरी[1] तु नग्निका[2]ऽरजाः॥१७५॥
मध्यमा[1] तु दृष्टरजा[2] स्तरुणी[3] युवति[4] श्चरी[5] ।

---

विलासोऽङ्गे विशेषो यः प्रियाप्ता वासनादिषु (२) मण्डनाद्यादरन्यासो विच्छित्तो रूपदर्पतः (३) विब्बोकोऽभिमतप्राप्तावपि गर्वादनादरः (४) हर्षाद्रुदितगीतादिव्यामिश्रं किलिकिञ्चितम् (५) मोटायितं प्रियं स्मृत्वा साङ्गभङ्ग विजृम्भणम्। "मुठ प्रमर्दने भौवादिकः, मुटव आक्षेपमर्दनयोः तौदादिकः, पुटमुटण् सञ्चूर्णने चुरादिः, एषां मोटः मोटमिवाचरतीति मोटायते इति मोटायितमेकटकारो द्विटकारोऽपि पाठः"(६)दुःखोपचारः सौख्येऽपि हर्षात् कुट्टमितं मतम् (कुट्टण कुत्सनादौ चरादिः,कुट्टमितं लब्धापुत्वे कुट्टमितम् अधरादिग्रहणात् दुःखपिवर्धः ) (७) अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम् । मसृणाङ्गन्यासः (८) वक्तव्या भाषणं व्याजाद्विहृतं दर्शितेङ्गितम् । (९) चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोमतः। (१०) इत्येवमलंक्रियन्ते एभिरित्यलङ्काराः,स्त्रीणामिति न पुंसां रतिभावाद्धृदयगोचरीभूताद्भवन्ति स्वाभाविकास्ते च दशसंख्याः स्युरिति ॥

(१) प्रगल्भस्य प्रौढ़स्य भावः प्रागल्भ्यं सम्प्रयोगे निर्भयत्वमित्यर्थः ॥

(२) भ्रू तारकादीनां बहुविकारो हावः (१) अङ्गस्याल्पोविकारो भावः (२) अङ्गस्य प्रचरो विकारो हेला (३) अङ्गजास्त्वङ्गजा अङ्गारा इति शृङ्गरतः• "अलङ्कारास्तु नाट्यज्ञैः ज्ञेया भावरसाश्रयाः । यौवनेऽभ्यधिका स्त्रीणां विकारा वक्त्रगात्रजा" इति । "देहात्मकं भवेत् सत्वाद्भावः (१) समुत्थितः । भावात्समुत्थितो हावो (२) हावाद्धेला (३) समुत्थित" इति च व एव ॥

(३) छेका अवसरज्ञा, मत्ता च उन्मतता ॥

तलुनी[6] दिक्करी[7] वर्य्या[1] पतिंवरा[2] स्वयंवरा[3](1) ॥१७५॥
सुवासिनी[1] वधूटी[2] स्यात्(2) चिरिण्टी[3] अथ सधर्म्मिणी ।
पत्नी[2] सहचरी[3] पाणिगृहीती[4] गृहिणी[5] गृहाः[6] ॥१७६॥
(3)दाराः[7] क्षेत्रं[8] वधू[9] भार्य्या[10] जनी[11] जाया[12] परिग्रहः[13]
द्वितीयो[14] ढा[15] कलत्रञ्च[16] पुरन्ध्री[1] तु कुटुम्बिनी[2] ॥१७७॥
प्रजावती[1] भ्रातृजाया[2](4) सूनोः स्नुषा[1] जनी[2] वधूः[3] ।
भ्रातृवर्गस्य या जाया यातर[1](5) स्ताः परस्परम् ॥१७८॥
वीरपत्नी[1] वीरभार्य्या[2] कुलस्त्री[1] कुलबालिका[2](6) ।
(7)प्रेयसी[1] दयिता[2] कान्ता[3] प्राणेशा[4] वल्लभा[5] प्रिया[6] ॥१७९॥
हृदयेशा[7] प्राणसमा[8] प्रेष्ठा[9] प्रणयिनी[10] च सा ।
प्रेयस्या[11]-द्याः पुंसि पत्यौ भर्त्ता[12] सेक्ता[13] पति[14] र्वरः[15] ॥१८०॥
विवोढा[16] रमणो[17] भोक्ता[18] कान्तो[19] वरयिता[20] धवः[21] ।
जन्या[1] स्तु तस्य सुहृदो विवाहः[1] पाणिपीडनम् ॥१८१॥
पाणिग्रहण[3] मुद्वाह[4] उपात् याम[5]-यमा[6] वपि ॥

---

(1) कन्येति त्रयं सामान्यतः कन्यानामनि गौरीति, द्वयम् अष्टवर्षीय कन्यानामनि, युवतिस्त्रियां सप्त, विवाहोत्सुकायां त्रीणि ॥

(2) क्षुद्रवधूनामनि द्वयम् । कलत्रान्तं भार्य्यायाम् ॥

(3) दाराः पुंल्लिङ्गो बहुवचनान्तश्च, एकवचनान्तोऽपि दृश्यते ॥

(4) भ्रातृजायेत्यत्र "ऋतां विद्यायोनिसम्बन्धे" इति षष्ठ्यलोपः दृश्यपि भ्रातृजायामित्यादौ सप्तमी समासः । भ्रातृजायापि, यथाह रघुवंशम् "रथानुमन्त्र प्रतिपद्य वाक्याम्ता भ्रातृजायां पुलिनेवतार्य्यै" इति ॥ (5) 'यातृ' इति शब्दरूपम् 'या' इति भाषा प्रसिद्धिः ॥

(6) पालिका इति १ वा कुलपालिका इत्यमरः २ ॥

(7) प्रेयांसो प्रेयांसः, सान्तः, अन्येऽकारान्ताः वेत्ता वेत्तारौ

दारकर्म[७] परिणयो[८] जामाता[१] दुहितुः पतिः ॥१८२॥
उपपतिस्तु[१] जारः[२] स्यात् भुजङ्गो[१] गणिकापतिः ।
जम्पती[१] दम्पती[२] जायापती[३] भार्य्यापती[४] समाः ॥१८३॥
यौतकं[१] (१)युतयो र्देयं सुदायो[२] हरणं[३] च तत् ।
कृताभिषेका महिषी[१] भोगिन्यो[१] ऽन्या नृपस्त्रियः ॥१८४॥
सैरन्ध्री[१] या ऽन्यवेश्मस्था स्वतन्त्रा शिल्पजीविनी ।
असिक्नी[१] स्यादवृद्धा या प्रेष्या ऽन्तःपुरचारिणी ।
(२)प्राज्ञी[१] प्रज्ञा[२] प्रजानत्यां प्राज्ञा[१] तु प्रज्ञया ऽन्विता ।
स्यादाभीरी[१] महाशूद्री[२] जातिपुंयोगयोः समे ॥१८६॥
पुंयुक्त्या चार्य्या[१] ऽचार्य्याणी[२] (३) मातुलानी[१] तु मातुली[२] ।
उपाध्याया[१] न्युपाध्यायी[२] क्षत्त्रि[१] यर्य्या[१] च शूद्र्यपि[१] ॥१८७॥
स्वत आचार्य्या[१] शूद्रा च(४) क्षत्त्रिया[१] क्षत्त्रियाण्यपि[२] ।
(५)उपाध्याय्यु[१] पाध्याया[२] स्यादर्य्या[१] ऽर्य्याणी[२]पुनः समे(६)॥१८८
(७)दिधिषू[१]स्तु पुनर्भूर्द्विरूढ़ा स्या दिधिषू[१] पतिः(८) ।

---

अपिच, प्रेयस्याद्या दश शब्दाः पुंसि वर्त्तमानाः सन्तः पत्यौभर्त्तरि वर्त्तन्ते, ते यथा, प्रेयान् १ दयितः २ कान्तः ३ प्राणेशः ४ वल्लभः ५ प्रियः ६ हृदयेशः ७ प्राणसमः ८ प्रेष्ठः ९ प्रणयी १०, प्रणयिनौ प्रणयिनः, नाम्नः॥

(१) युतयो र्वधवरयोर्देयं परिधानवस्त्राभरणादि १ ॥

(२) पण्डितायाः । प्रजानन्त्याम् ॥ (३) आचार्य्यस्त्रियः ॥

(४) शूद्रादिजातीयानाम् ॥ (५) उपाध्यायो वेदपाठकः ॥

(६) अर्य्यस्य वश्यस्य स्त्री अर्य्या ॥

(७) दिधिषूर्दिधिषु दिधीषुरित्यपि "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रे दिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता" २ इति मतान्तरम् ॥

(८) दिधिषुः पतिः अग्रे दिधिषुः, कुत्रचित्पाठो यथा ॥

स तु द्विजोऽग्रेदिधिषूर्[1] यस्य स्यात्सैव गेहिनी ॥१८९॥
ज्येष्ठेऽनूढे परिवेत्ता[1] ऽनुजो दारपरिग्रही ।
तस्य ज्येष्ठः परिवित्ति[1] र्जाया तु परिवेदिनी[1](1) ॥१९०॥
वृषस्यन्ती[1] कामुकी[2] स्या दिच्छायुक्ता तु कामुका[1] ।
(2)कृतसापत्निका[1] ऽध्यूढा[2] ऽधिविन्नाथ[3] पतिव्रता[1] ॥१९१॥
एकपत्नी[2] सुचरित्रा[3] साध्वी[4] सत्य[5] सती[1] त्वरी[2] ।
पुंश्चली[3](3) चर्षणी[4] बन्धक्य[5] विनिता[6] च पांसुला[7] ॥१९२॥
स्वैरिणी[8] कुलटा[9] (4)याति या प्रियं साऽभिसारिका[1] ।
वयस्या[1] ऽलिः[2] सखी[3] सध्री[4]च्यशिश्वी[1] तु शिशुं विना ॥१९३॥
पतिवत्नी[1] जीवत्पति[2] र्विश्वस्ता[1] विधवा[2] समे ।
(5)निर्वीरा[1] निष्पतिसुता जीवत्तोका[1] तु जीवसूः[2] ॥१९४॥
मृतप्रसूतिका निन्दुः[1] सश्मश्रु नरमालिनी[1] ।
कात्यायनी[1] त्वर्द्धवृद्धा काषायवसना ऽधवा ॥१९५॥
श्रवणा[1] भिक्षुकी[2] मुण्डा[3] पोटा[1] तु स्त्री नरलक्षणा ।

---

(1) यत्स्मृतिः "येऽग्रजेष्व ऽकलत्रेषु कुर्व्वते दारसंग्रहम् । ज्ञेयाः परिवेत्तारः परिवित्तिस्तु पूर्व्वज" इति । दारपरिग्रही परिणी कलत्रः ॥

(2) कृतं सापत्न्यं सपत्नीभावोऽस्याः सा । "अध्यूढ ईर्ष्या ऽध्यूढा कृतसापत्न्य योषितीति" श्रीधरः । अध्युपरि विन्दत्यस्या इत्यधिविन्ना "विद्लृ लाभे" तुदादौ मुचादिः, विन्दतेः परस्य क्त प्रत्य तकारस्य नित्यं नकारः, नत्व ह्रीघ्रा ध्मात्रोऽनुदविन्ते इति सूत्रे विकल्पः । धर्षणी २ ॥ (३) इत्यपि ॥ (४) नवकुलटा नाम्नि ॥

(5) "रहिता पति पुत्राभ्यां निर्वीरेत्यभिधीयते ।" अवीरा इ मरः जीवन्तौ जीवत्सुः । जीवत्पुत्रा इति वा ॥

साधारणस्त्री[१] गणिका[२] वेश्या[३] पण्यपणाऽङ्गना[५(१)] ॥१९६॥

भुजिष्या[६] लञ्जिका[७] रूपाजीवा[८] वारवधूः पुनः ।

सा वारमुख्या[१]ऽथ चुन्दी[१] कुट्टनी[२] शम्भली[३] समाः ॥१९७॥

पोटा[१] वोटा[२] च चेटी[३] च दासी[४] च कुटहारिका[५] ।

नग्ना[१] तु कोटवी[२] वृद्धा पलिक्न्यथ[१] रजस्वला[१] ॥१९८॥

पुष्पवत्य[२]स्थिरा[३]त्रेयी[४(२)] स्त्रीधर्म्मिणी[५] मलिन्य[६]वीः[७] ।

उदक्या[८] ऋतुमती[९] च पुष्पहीना तु निष्कला[१] ॥१९९॥

राका[१] तु सरजाः कन्या स्त्रीधर्म्मः[१] पुष्पं[२] मार्त्तवम् ।

रज[४]स्तत्कालस्तु ऋतुः[१(३)] सुरतं[१] मोहनं[२] रतम्[३] ॥२००॥

संवेशनं[४] सम्प्रयोगः[५] सम्भोग[६]श्च रहो[७] रतिः[८] ।

ग्राम्यधर्मो[९] निधुवनं[१०] कामकेलिः[११] पशुक्रिया[१२] ॥२०१॥

व्यवायो[१३] मैथुनं[१४(४)] स्त्रीपुंसौ[१] द्वन्द्वं[२] मिथुनं[३] च तत् ।

अन्तर्व्वत्नी[१] गुर्व्विणी[२] स्यात् गर्भवत्यु[३]दरिण्यपि[४] ॥२०२॥

आपन्नसत्त्वा[५] गुर्व्वी[६] च श्रद्धालु[१]र्दौहदान्विता ।

विजाता[१] च प्रजाता[२] च जातापत्या[३] प्रसूतिका[४] ॥२०३॥

गर्भ[१]स्तु गरभो[२] भ्रूणो[३] दोहदलक्षणं[४] च सः[(५)] ॥

गर्भाशयो[१] जरा[२]यूल्वे[२] कललो[१]ल्वे[२] पुनः समे[(६)] ॥२०३॥

---

(१) पण्याङ्गना । पणाङ्गना इत्येवम् ॥

(२) अविरात्रेयी इति वा पाठः । अवी अव्यौ अव्यः इति रूपम् ॥

(३) रजस् क्ली । ऋतुः पुं ॥ (४) चतुर्दश मैथुन नामानि ॥

(५) दोहदलक्षणं क्ली । जरायुः पुं । उल्वः पुं क्ली ॥

(६) शुक्रशोणित समवायस्य "सप्ताहं कललं विद्यात् ततः सप्ताह बुद्बुदम् । बुद्बुदाज्जायते पेशी पेशीतोऽपि घनं भवेत्" इत्याचाराङ्ग वृत्तिः ॥

(१)दोहदं[१] दौर्हृदं[२] श्रद्धा[३] लालसा[४] सूतिमासि तु।
वैजननो[१] विजननं[१] प्रसवो[२] नन्दनः[१] पुत्रः ॥२०५॥
उद्वहो[२] ऽङ्गा[३]-त्मजः[४](२) सूनु[५] स्तनयो[६] दारकः[७] सुतः[८]।
पुत्रो[९] दुहितरि[१०] स्त्रीत्वे (३)तोका[१]-पत्य[२]-प्रसूतयः[३]॥२०६।
(४)तुक्[४] प्रजो[५]भयो भ्रात्रीयो[१] भ्रातृव्यौ[२] भ्रातु रात्मजे।
स्वस्रीयो[१] भागिनेय[२] श्च जामेयः[३] कुतप[४] श्च सः ॥२०७॥
नप्ता[१] पौत्रः[२] पुत्रपुत्रो दौहित्रो[१] दुहितुः सुतः।
प्रतिनप्ता[१] प्रपौत्रः[२] स्यात् तत्पुत्र स्तु परम्परः[१](५) ॥२०८॥
पैतृष्वसेयः[१] स्यात् पैतृष्वस्रीय[२] स्तुक पितृष्वसुः।
मातृष्वस्रीय[१] स्तु क् मातृष्वसु र्मातृष्वसेय[२] वत् ॥२०९॥
(६)विमातृजो वैमात्रेयो[१] द्वैमातुरो[१] द्विमातृजः।
सत्या स्तु तनये साम्मातुर[१]-व द्भद्रमातुरः[२] ॥२१०॥
सौभागिनेय[१] कानीनौ[२] सुभगा-कन्ययोः सुतौ।
(७)पौनर्भव[१] पारस्त्रैणेयौ[२] पुनर्भू-परस्त्रियोः ॥२११॥
दास्या दासेर[१] दासेयौ[२] नाटेर[२] स्तु नटीसुतः।
बन्धुलो[१] बान्धकिनेयः[२](८) कौलटेरो[३]ऽसतीसुतः ॥२१२॥

---

(१) दोहदं क्ली पुं॥ (२) अङ्गजः१ आत्मजः २ इत्येवम् ॥

(३) स्वार्थिकेऽन्त्रय सूत पुत्र वन्दारस्येति विकल्पेन इत्वे, पुत्रिका पक्षे पुत्रका ॥ (४) त को तकः ॥

(५) "परम्परः प्रपौत्रादौ म्रगभेदे परम्परः। परम्परा परिपाट्यां सन्तानेऽपि वधे क्वचित् ॥" (६) विरुद्धा माता विमाता तस्यां जातः ॥

(७) "पुनरक्षतयो नित्वाहाक्षते वा यथाविधि। सा पुनर्भूः सुतस्तस्याः पौनर्भव उदाहृत" इति स्मृतिः ॥

(८) असती भिक्षुक सत्योः सुतस्य ॥

स तु कौलटिनेयः[१] स्यात् यो भिक्षुकसतीसुतः[(१)] ।
द्वावप्येतौ कौलटेयौ[१] क्षेत्रजो[१] देवरादिजः[(२)] ॥२१३॥
स्वजाते त्वौरसो[१]-रस्यौ[२] मृते भर्त्तरि जारजः ।
गोलको[१]ऽथाक्षते कुण्डो[१] भ्राता[१] तु स्यात् सहोदरः[२] ॥२१४॥
समानोदर्य्य[३]-सोदर्य्य[४]-सगर्भ्य[५]-सहजा[६] अपि ।
सोदर[७]श्च स तु ज्येष्ठः[१] स्यात् पितरः[२] पूर्वजो[३]ऽग्रजः[४] ॥२१५॥
जघन्यजो[१] यविष्ठः[२] स्यात् कनिष्ठो[३]ऽवरजो[४]ऽनुजः[५] ।
स यवीयान्[६] कनीयां[७]श्च पितृव्य[१]-श्याल[२१]-मातुलाः[१(३)] ॥२१६
पितुः पत्न्या च मातुश्च भ्रातरो देवृ[१] देवरौ[२(४)] ।
देवा[३] वा वरजे पत्युर्जामि[१]स्तु भगिनी[२] स्वसा[३] ॥२१७॥
[(५)]ननान्दा[१] तु स्वसा पत्युर्ननन्दा[२] नन्दिनी[३] त्वपि ।
पत्न्यास्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः[१] कुली[२] च सा ॥२१८॥
कनिष्ठा श्यालिका[१] हाली[२] यन्त्रणी[३] केलिकुञ्चिका[४] ।
केलि[१]र्द्रवः[२] परीहासः[३] क्रीडा[४] लीला[५] च नर्म[६] च ॥२१९॥
देवनं[७] कूर्दनं[८] खेला[९] ललनं[१०] वर्करो[११]ऽपि च ।
वप्ता[१] तु जनक[२]स्तातो[३] बीजी[४] जनयिता[५] पिता[६(६)] ॥२२०॥

---

(१ भिक्षुकी चासौ सती च, भिक्षुकसती "पुंवत्कर्म्मधारये" इति पुंवद्भावः । (२) क्षेत्रे कलत्रे जातः क्षेत्रजः, तल्पजत्वादेति केचित् ॥

(३) इति "काका" एकं नाम पितृव्ये "शाला" नाम एकं श्यालके "मामा" नाम एकं मातुले ॥

(४) देवा देवरौ देवरः, देवरः देवरौ देवराः, देवा देवानौ देवानः ।

(५) ननान्दा ननान्दरौ ननान्दरः । यन्त्रिणी इति पाठो वा, वश्यं स्त्री कनिष्ठायाम् ॥

(६) बीजिनौ बीजिनः, "स्त्री क्षेत्रमोषधीपात्रं बीजो चाम-

पितामह[1] स्तस्य पिता तत्पिता प्रपितामहः[1] ।
मातु र्मातामहा[1]-द्येवं माता[1] ऽम्बा[2] जननी[3] प्रसूः[4] ॥२२१॥
सवित्री[5] जनयित्री[6] च जमिला[1] तु बहुप्रसूः ।
धात्री[1] तु स्या दुपमाता[2] वीरमाता तु वीरसूः ॥२२२॥
श्वश्रू[1] र्माता पति पत्न्योः श्वशुर स्तु तयोः पिता ।
पितर[1] स्तु पितु र्वंश्या मातु र्मातामहाः[1] कुले ॥२२३॥
पितरौ[1] मातापितरौ[2] मातरपितरौ[3] पिता च माता च ।
श्वश्रूश्वशुरौ[1] श्वशुरौ[2] पुत्रौ[1] पुत्त्र श्च दुहिता च ॥२२४॥
भ्राता च भगिनी चापि भ्रातरा[1] वथ बान्धवः[1] ।
स्वो[2] ज्ञातिः[3] स्वजनो[4] बन्धुः[5] सगोत्र[6]श्च निजः[1]पुनः ॥२२५॥
आत्मीयः[2] स्वः[3] स्वकीय[4]श्च सपिण्डा[1] स्तु सनाभयः[2] ।
तृतीयाप्रकृतिः[1] षण्डः[1] षण्ढ[3] क्लीबो[4] नपुंसकम्[5(1)] ॥२२६॥

इन्द्रियायतन[1] मङ्ग[2]-विग्रहौ[3],
क्षेत्र[4]-गात्र[5]-तनु[6]भूघना[7]-स्तनूः[8] ।
मूर्त्तिमत्[9]-करण[10]-काय[11]-मूर्त्तय,[12]
वेर[13]-संहनन[14]-देह[15]-सञ्चराः[16(2)] ॥२२७॥

घनो[17] बन्धः[18] पुरं[19] पिण्डो[20] वपुः[21] पुद्गल[22]-वर्ष्मणी[23] ।
कलेवरं[24] शरीरो[25]ऽस्मिन्न जीवे कुणपं[1] शवः[2(3)] ॥२२८॥

---

मृताधमम् । तत्रवशा नरः स्वामी जन्तु स्तत्र निमिष्यते" इति गरुड-पुराणम् ॥

(१) नपुंसकमिति क्लो ॥

(२) तनुः स्त्री, तनूः स्त्री, वेरः पुं क्ली, देहः पुं क्ली ॥

(३) पिण्डः पुं क्ली, वपुस् क्ली, वर्ष्मन् क्ली शरीरः पुं क्ली, शवश इति

मृतकं[1] रुण्ड[1]-कबन्धौ[2] स्यादपशीर्षे क्रियायुजि ।

(1)वयांसि[1] तु दशाः[2] प्रायाः[3] सामुद्रं[1] देहलक्षणम्(2) ॥ २२९ ॥

एकदेशे प्रतीकोऽङ्गा[2]-वयवा[3]-पघना[4] अपि ।

उत्तमाङ्गं[1] शिरो[2] मूर्धा[3] मौलि[4] र्मुण्डं[5] क[6]-मस्तके[7] ॥ २३० ॥

वराङ्गं[8] करणत्राणं[9] शीर्षं[10] मस्तिक[11] मित्यपि(3) ।

(4)तज्जाः केशा[1] स्तीर्थवाका[2] श्चिकुराः[3](5) कुन्तलाः[4] कचाः[5] ॥ २३१ ॥

वालाः[6] स्युस्तत्पराः पाशो[1] रचना[2] भार[3] उच्चयः[4](6) ।

हस्तः[5] पक्षः[6] कलाप[7]श्च केश-भूयस्त्ववाचकाः ॥ २३२ ॥

अलका[1]स्तु कर्कराला[2] खङ्गर[3] श्चूर्णकुन्तलः[4] ।

---

रूपं, तेन शयसी वयांसी, शवोऽपि। पुं क्ली, मृतशरीरे द्वयं कुणपं शवस्य ॥

(1) कबन्धः पुं क्ली, अपगतम् शीर्षं यस्य अपशीर्षे क्रियायुजि मृतशरीरे इत्यर्थः ॥

(2) "सामुद्रो देहलक्षणे । सामुद्रं च समुद्रीय लवणादिषु भेद्यवत्" इति पुंस्यपि महेश्वरः ॥

(3) शिरः क्ली, मूर्धा पुं, मौलिः पुं स्त्री, मुण्डं पुं क्ली, कं पुं क्ली, मस्तकमपि क्ली पुं ॥

(4) तस्मिञ्छिरसि, तज्जा इति यौगिकसूचनं, तेन शिरसिजाः शिरोरुहाः मूर्धजा इत्यादि ॥

(5) प्राकृते तु कस्य छा देशात् चिकुरा इति, छिकुरोऽपीति कश्चित्। यदाह "कुन्तला मूर्धजा लक्षाश्चिकुराश्चिकुराः" इति ॥

(6) तेभ्यः केशादिशब्देभ्यः पराः अमी स्थिताः पाशादयः सप्त शब्दाः केशभूयस्त्ववाचका भवन्ति, यथा केशपाशः १ केशरचना २ केशभारः ३ केशोच्चयः ४ केशहस्तः ५ केशपक्षः ६ केशकलापः ७ एवं कचादिभ्योऽप्यूह्यं यौगिकत्वात् ॥

(१)स तु भाले भ्रमरकः[1] कुरुलो[2] भ्रमरालकः[3] ॥२३३॥
(२)धम्मिल्लः[1] संयताः केशाः केशवेशे कबर्यथ ।
(३)वेणिः[1] प्रवेणिः[2] शीर्षण्य[1]-शिरस्यौ[2] विशदे कचे ॥२३४॥
केशेषु वर्त्म सीमन्तः[1] पलितं[1] (४)पाण्डुरः कचः ।
चूडा[1] केशी[2] केशपाशी[3] शिखा[4] शिखण्डिका[5] समाः ॥२३५॥
सा बालानां काकपक्षः[1] शिखण्डक[2]-शिखाण्डकौ[3] ।
तुण्ड[1]मास्यं[2] मुखं[3] (५)वक्त्रं[4] लपनं[5] वदना[6]-नने[7] ॥२३६॥
भाले[1] गोध्य[2]-लिका[3]-गोधि[4]-ललाटानि[5] श्रुतौ[1] श्रवः[2] ।
शब्दाधिष्ठान[3]-पैञ्जूष[4]-महानाद[5]-ध्वनिग्रहाः[6] ॥२३७॥
कर्णः[7] श्रोत्रं[8] श्रवणं[9] च वेष्टनं[1] कर्णशष्कुली[2] ।
पालिस्तु[1] कर्णलतिका[2] शङ्खो[1] भालश्रवोऽन्तरे ॥२३८॥
चक्षु[1]रक्षी[2]-क्षणं[3] नेत्रं[4] नयनं[5] दृष्टि[6]रम्बकम्[7] ।
लोचनं[8] दर्शनं[9] दृक्[10] च तत्तारा[1] तु कनीनिका[2](५) ॥२३९॥
वामं तु नयनं सौम्यं भानवीयं तु दक्षिणम् ।

---

(१) चत्वारि चक्रीकृत केशनामानि । भालाभिमुखे चेत् तत्र त्र्योऽपि नामानि ॥

(२) "तद्बन्धविशेषाः स्युर्वेणी धम्मिल्लकुन्तलकबर्यः" इति हलायुधः । ऐकपद्ये पाठोऽपि क्वचित् ॥ (३) वेणिः दीर्घान्तोऽपि ॥

(४) पलित पुं क्ली, । (५) क्ली मुखं पुं क्ली ॥

(५) 'तारकापि, तारकावर्णकेति इकारस्याभावः, "तारको दैत्यभित्कर्णधारयोर्हक्तारकम् । अक्षिकनीनिकायां च तारकापि चेति" "तारकाक्ष्णः कनीनिके" इत्यमरः "तारकेतिकसप्तः नक्षत्रा ज्योतिषितीत्वाभावः" इति क्षीरस्वामी॥

अंसो भुजशिरः स्कन्धो जत्रु(१) सन्धि-र्वक्षोंऽसयोः ॥२५२॥
(२)भुजो बाहुः प्रवेष्टो दोः बाहाऽथ भुजकोटरः ।
दोर्मूलं खण्डिकः (३)कक्षा पार्श्वं स्यादेतयोरधः ॥२५३॥
कफोणिस्तु भुजामध्यं कफणिः कूर्परं स्मृतः(४) ।
अधस्तात् मणिबन्धात् स्यात् प्रकोष्ठः कलाचिका ॥२५४॥
प्रगण्डः कूर्परांसान्तः पञ्चशाखः शयः शमः ।
हस्तः पाणिः करोऽस्याधो मणिबन्धो मणिश्च सः ॥२५५॥
करभोऽस्मादाकनिष्ठं करशाखाऽङ्गुली समे ।
अङ्गुरी चाङ्गुलोऽङ्गुष्ठः तर्जनी तु प्रदेशिनी ॥२५६॥
ज्येष्ठा तु मध्यमा मध्या सावित्री स्यादनामिका ।
कनीनिका तु कनिष्ठाऽवहस्तो हस्तपृष्ठतः(५) ॥२५७॥
कामाङ्कुशो महाराजः करजो नखरो नखः ।
करशूको भुजाकण्टः पुनर्भव-पुनर्नवौ ॥२५८॥

---

(१) जत्रु क्ली । अथ जत्रुणी जत्रूणि ॥

(२) भुजः पुं स्त्रीलिङ्गः, स्त्रियां भुजा आबन्तः। दोः पुं क्लीबलिङ्गः सान्तः दोः दोषौ दोष इति पुंसि, दोः दोषी दोषि इति क्लीबे, दोषा इत्याबन्तोऽपि स्त्रीलिङ्गः यन्महेश्वरः "दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि चेति"। "बहुदोषो गुणध्वंसी गोहन्ता जनपीडकः। करो तु किरणे लोकमस्तमाप महोदयम् ॥" इति विदग्धमुखमण्डने विष्णोः स्तुतिर्निरूक्ते। बाहा आबन्तः ॥ (३) कक्षा पुं क्ली कक्षाः कक्ष्या इति च षकार द्वितीयस्वरान्तोऽपीत्यमर टीका ॥

(४) कूर्परः कफणिर्मणिरिति पुंस्यपि वैजयन्ती ॥

(५) हस्तस्य पृष्ठतः हस्तपृष्ठे इत्यर्थः, आद्यादिभ्यस्तसिः इति सप्तम्यर्थे तसु प्रत्ययः ॥

भगो[4]ऽपत्यपथो[5] योनिः[6] स्मरागारस्मर[7]-कूपिके[8](1) ॥२७३॥

स्त्रीचिह्नं[9] मथ पुंश्चिह्नं[1] मेहनं[2] शेफशेपसी[4] ।

शिश्नं[5] मेढ्रः[6] कामलता[7] लिङ्गं[8] च द्वय मप्यदः ॥२७४॥

गुह्य[1]-मप्रजननो[1]-पस्थौ[3](2) गुह्यमध्यं मणी[1] कणिः[2] ।

सीवनी[1] तदधः सूत्रं स्या दण्डं[1] पेल[2] मण्डकः[3] ॥२७५॥

मुष्को[4]ऽण्डकोशो[5] वृषणो[6]ऽपानं[1] पायु[2] र्गुदं[3] च्युतिः[4] ।

अधोमर्म[5] मलद्वारं[6] त्रिवलीकं[7] वली[8] अपि ॥२७६॥

विटपं[1] तु कटाप्रोथ्य[2] मन्तरा मुष्कवङ्क्षणाम्(3) ।

ऊरुसन्धि र्वङ्क्षणः[1] स्यात् सक्थ्यूरु[2] स्तस्य पर्व तु ॥२७७॥

जानु र्नलकीलो[2]ऽष्ठीवान्[3] पश्चाद्भागोऽस्य मन्दिरः[1]।

कपोली[1] त्वग्रिमो जङ्घा[1] प्रसृता[2] नलकिन्यपि ॥२७८॥

प्रतिजङ्घा[1] त्वग्रजङ्घा[2] पिण्डिका[1] तु पिचण्डिका[2] ।

गुल्फ[1] स्तु चरणग्रन्थि[2] र्घुटिको[3] घुण्टको[4] घुटः[5] ॥२७९॥

चरणः[1] क्रमणः[2] पादः[3] पदो[4](4)ऽङ्घ्रि[5] श्चलनः[6] क्रमः[7] ।

पादमूलं[1] गोहिरं[2] स्यात् पार्ष्णि[1] स्तु घुटयो रधः ॥२८०॥

पादाग्रं[1] प्रपदं[2] क्षिप्रं[1] त्वङ्गुष्ठाङ्गुलिमध्यतः(5) ।

---

(1) स्मरमन्दिरः १ स्मरकूपिका २ ॥

(2) "[illegible] प्रजनोपस्थोऽस्त्री" इति स्त्रीवेऽप्याह वैजयन्ती ॥

(3) मुष्कवङ्क्षणमिह क्लीबलिङ्गे द्वितीयैकवचनं तदाह वाग्भटः मुष्कवङ्क्षणयोर्मध्ये विटपं कटतारकम्" इति ॥

(4) पद् पाद् पदौ पादः। "पत् पादश्चरणोऽस्त्री" इति व्याडिः ॥

(5) अङ्गुष्ठश्च अङ्गुलयश्च अङ्गुष्ठाङ्गुलयः तासां मध्यं तस्मात् आद्या-[illegible] इति सप्तम्यर्थे तसु प्रत्ययः ॥

(1)मज्जा[1] तु कौशिकः[2] शुक्रकरो[3]ऽस्थिस्नेह-सम्भवौ[4](2) ॥२८२॥
शुक्रं[1] रेतो[2](3) बलं[3] बीजं[4] वीर्यं[5] मज्जासमुद्भवम्[6]।
आनन्दप्रभवं[7] पुंस्त्व[8]मिन्द्रियं[9] किट्टवर्जितम्[10] ॥२८३॥
पौरुषं[11] प्रधानधातु[12]र्लोम[1] रोम[2] तनूरुहम्[3]।
त्वक्[1] छवि[2]श्छादनी[3] कृत्ति[4]श्चर्मा[5]जिन[6]मसृग्धरा[7] ॥२८४॥
वस्नसा[1] तु स्नसा[2] स्नायु[3]र्नाड्यो[1] धमनयः[2] सिराः[3]।
कण्डरा[1] तु महास्नायु[1]र्मलं[1] किट्टं[2](4) शरीरजम्[3] ॥२८५॥
दूषीका[1] दूषिका[2] नेत्रं कुलुकं[1] पिप्पिका[1] पुनः।
दन्त्यं कार्णं तु पिञ्जूषः[1] सिङ्घाणो[1] घ्राणसम्भवः ॥२८६॥
सृणीका[1] स्यन्दिनी[2] लाला[3]ऽऽस्यासवः[4] कफकूर्चिका[5](5)।
मूत्रं[1] वस्तिमलं[2] मेहः[3] प्रस्रावो[4] नृजलं[5] स्रवः[6] ॥२८७॥
कुष्ठिका[1] तु लिङ्गमलं विट्[1](6) विष्ठा[2]ऽवस्करः[3] शकृत्[4]।
गूथं[5] पुरीषं[6] शमलो[7]-च्चारौ[8] वर्चस्क[9]-मस्तकौ[10] ॥२८८॥

---

(1) मज्जानौ मज्जानः, वाचस्पतिस्तु "अथ मज्जाद्वयो" रिति स्त्रियामप्याह, तदाभिदादित्वादङि मज्जा आवमः कौशिकः ॥

(2) अस्थिस्नेहः १ अस्थिसम्भवः २ अस्थितेजोऽपि ॥

(3) रेतसी रेतांसि ॥

(4) "किट्टं मलोऽस्त्रियां" मित्यमरः ॥

(5) लाला नामानि पञ्च ॥

(6) विट् स्त्री, विशौ विशः, वैजयन्तीकारस्तु "उच्चारो विट् मला" इति क्लीबेऽप्याह तदा विशी वींशि। "विष्ठा विशौ स्त्रियाम्" इत्यमरः, विट् विशौ विशः, शकृती शकृन्ति शकृदादौ दन्तपादनासिकेति विकल्पेन शकन् आदेशे शकानि शक्ना शकता ऽ शकभ्यां "शकृद्भ्या-मित्यादि ॥

उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते।
वस्त्रमाल्यादि तत् पूर्णपात्रं[1] पूर्णानकं[2] च तत्॥३४१॥
तत् स्यादाप्रपदीनं[1] तु व्याप्नोत्याप्रपदं हि यत्।
(1)चीवरं[1] भिक्षुसङ्घाटी[2] जीर्णवस्त्रं पटच्चरम्[1]॥३४२॥
शाणी[1] गोणी[2] छिद्रवस्त्रे जलाद्री[1] क्लिन्नवाससि।
पर्य्यस्तिका[1] परिकरः[2] पर्य्यङ्कः[3] श्चावसक्थिका[4]॥३४३॥
(2)कुथो[1] वर्णः[2] परिस्तोमः[3] प्रवेणी[4]-नवता[5]-ऽऽस्तराः[6]।
अपटी[1] काण्डपटः[2] स्यात् प्रतिसीरा[3]जवन्यपि[4](3)॥३४४॥
तिरस्करिण्य[5]थो ल्लोचो[1] वितानं[2] कदको[3]ऽपि च।
चन्द्रोदयो[4](4) स्थूलं[1] दूष्यं[2] केणिका पटकु[3]ट्यपि॥३४५॥
गुणालयनिकायां[2] स्यात् संस्तर[1]-स्रस्तरौ[2] समौ(5)।
तल्पं[1] शय्या[2] शयनीयं[3] शयनं[4] तलिमं[5](6) च तत्॥३४६॥
मञ्च[1]-मञ्चक[2]-पर्य्यङ्क[3]-पल्यङ्काः[4] खट्वया[5] समाः।
उच्छीर्षकं[1] सुपाधान[2]-बर्हौ[3] पाली[1] पतद्ग्रहः[2]॥३४७॥
प्रतिग्राहो[3](7) मुकुरा[1]-ऽऽदर्शौ[2]-दर्शौ[3] तु दर्पणः[4]।

---

(1) ह मुनिजनाच्छादनस्य॥

(2) सामान्येन गजाद्युपरि सभाभूमौ वा आस्तरणस्य "सुल-कालिम्" इति भाषा॥

(3) यवनिकाऽपि। पश्च प्रच्छादनपटे "परदा" इति यस्य प्रसिद्धिः॥

(4) वस्त्रगृहस्य॥

(5) पल्लवादिरचितशय्या॥

(6) तलिनम् इति वा॥

(7) भाजरोऽपि॥

स्याद्वेत्रासन[१] मासन्दी[२](१) विष्टरः[१] पीठ[२] मासनम्[३] ॥ ३४८ ॥
कशिपु[१] र्भोजनाच्छादौ वीध्रीरं[१] शयनासने ॥
लाक्षा[१] द्रुमामयो[२] राक्षा[३] रङ्गमाता[४] पलङ्कषा[५] ॥ ३४९ ॥
जतु[६] क्षतघ्ना[७] कृमिजा[८] यावा[१] लक्तौ[२] तु तद्रसः ।
अञ्जनं[१] कज्जलं[२] दीपः[१] प्रदीपः[२] कज्जलध्वजः[३] ॥ ३५० ॥
स्नेहप्रियो[४] गृहमणि[५] र्दशाकर्षो[६] दशेन्धनः[७] ।
व्यजनं[१] तालवृन्तं[२] तत् पवित्रं[१] मृगचर्मणः ॥ ३५१ ॥
वासावर्त्ती[१] तु वस्त्रस्य कङ्कतिः[१] केशमार्जनः[२] ।
प्रसाधन[३] स्याद बालक्रीडनके[१] गुडो[२] गिरिः[३] ॥ ३५२ ॥
गिरियको[४] गिरिगुडः[५] समौ कन्दुक[१]-गेन्दुकौ[२] ।
राजा[१] राट्[२] पृथिवीशक्र[३]-मध्यलोकेश[४]-भूभृतः[५] ॥ ३५३ ॥
महीक्षित्[६] पार्थिवो[७] मूर्द्धाभिषिक्तो[८] भूप्रजा-नृपः[९](२) ।
(३)मध्यमो[१] मण्डलाधीशः[२] सम्राट्[१] तु शास्ति यो नृपान् ॥ ३५४ ॥
(४)यः सर्वमण्डलस्येशो राजसूयं(५) च यो ऽयजत् ।
चक्रवर्त्ती[१] सार्वभौम[२] स्ते तु (६)द्वादश भारते ॥ ३५५ ॥
आर्षभि[१] र्भरत[२] स्तत्र सगर[१] स्तु सुमित्रभूः[२] ।

---

(१) आसन्दी स्त्री पुंलिङ्गः इति हलायुधटीका "कद्दत" इत्यपि ॥

(२) भूपः, प्रजापः, नृपः यौगिकत्वात् भूपालः, लोकपालः नरपाल इत्यादयः ॥

(३) अपेतमसम्राडपेक्षया सामान्यः ॥

(४) द्वादश राजचक्रस्य ॥

(५) राजसूयं यज्ञविशेषम् ॥

(६) ते तिक आर्षभ्याद्या ब्रह्मदत्तपर्यन्ता द्वादश ॥

आनन्दो[६] नन्दनः[७] पद्मो[८] रामो[९] विष्णुद्विष[१]स्त्वमी(१) ॥३६२॥

(२)अश्वग्रीव[१]स्तारक[२]श्च मेरको[३] मधुरे[४]व च।

निशुम्भ[५]-बलि[६]-प्रह्लाद[७]-लङ्केश[८]-मगधेश्वराः[९] ॥३६३॥

(३)जिनैः सह त्रिषष्टिः स्युः शलाकापुरुषा[१] अमी।

आदिराजः[१] पृथु[२]र्वैन्यो[३]मान्धाता[१](४) युवनाश्वजः[२] ॥३६४॥

धुन्धुमारः[१] कुवलाश्वो[२] हरिश्चन्द्र[१]स्त्रिशंकुजः[२]।

(५)पुरूरवा[१] बौध[२] ऐल[३] उर्वशीरमण[४]श्च सः ॥३६५॥

दौष्यन्ति[१]र्भरतः[२] सर्वदमः[३] शकुन्तलात्मजः[४]।

हैहय[१]स्तु कार्तवीर्यो[२] दोःसहस्रभृ[३]दर्जुनः[४] ॥३६६॥

कौशल्यानन्दनो[१] दाशरथी[२] रामो[३]ऽस्य तु प्रिया।

वैदेही[१] मैथिली[२] सीता[३] जानकी[४] धरणीसुता[५] ॥३६७॥

---

(१) अमी वक्ष्यमाणा अश्वग्रीवादयो नव विष्णूनां प्राजापत्यादीनां वासुदेवानां यथाक्रमं द्विषः प्रतिपक्षाः ॥

(२) एकैकम् ॥

(३) उपसंहारमाह जिनैरिति जिनैस्तीर्थङ्करैः ऋषभादिभिश्चतुर्विंशत्या सह मीलिता अमी भरतादयो द्वादश चक्रवर्तिनः-प्राजापत्यादयो नव वासुदेवाः-अचलादयो नव बलदेवाः-अश्वग्रीवाद्या नव प्रतिवासुदेवाश्चेति सर्वे मिलिता त्रिषष्टिः स्युः ते च शलाका पुरुषाः पुरुषेषु जातिविशेषेण उत्कृष्टाः ॥

(४) मान्धातादयो मान्धातारः, एते मान्धातृप्रमुखाः षड्लोके चक्रवर्तित्वेन प्रसिद्धाः। यदाह "मान्धाता १ धुन्धुमारश्च २ हरिश्चन्द्रः ३ पुरूरवाश्च ४ भरतः ५ कार्तवीर्यश्च ६ षडेते चक्रवर्तिनः ॥"

(५) पुरूरवाः पुरूरवसौ पुरूरवसः ॥

परिस्पन्दः[१] परिकरः[२] परिवारः[३] परिग्रहः[४] ॥३७९॥
परिच्छदः[५] परिबर्ह[६]स्तन्त्रो[७]-पकरणे[८] अपि।
राजशय्या[१] महाशय्या[२] भद्रासनं[१] नृपासनम्[२] ॥३८०॥
सिंहासनं[१] तु तत् हैमं(१) छत्रं[१] मातपवारणम्[२]।
चामरं[१] बालव्यजनं[२] रोमगुच्छः[३] प्रकीर्णकम्[४] ॥३८१॥
स्थगी[१] ताम्बूलकरङ्को[२] भृङ्गारः[१] कनकालुका[२]।
भद्रकुम्भः[१] पूर्णकुम्भः[२] पादपीठं[१] पदासनम्[२] ॥३८२॥
अमात्यः[१] सचिवो[२] मन्त्री[३] धीसखः[४] सामवायिकः[५]।
नियोगी[१] कर्मसचिव[२] आयुक्तो[३] व्यापृत[४] श्च सः ॥३८३॥
द्रष्टा तु व्यवहाराणां प्राड्विवाको[१] ऽक्षदर्शकः[२]।
महामात्राः[१] प्रधानानि[२](२) पुरोधा[१]स्तु पुरोहितः[२] ॥३८४॥
सौवस्तिको[२] ऽथ द्वारस्थ[१] क्षत्ता[२] स्यात् द्वारपालकः[३]।
दौवारिकः[४] प्रतीहारो[५] वेत्रि[६]-उत्सारक[७]-दण्डिनः[८] ॥३८५॥
(३)रक्षिवर्गे ऽनीकस्थः[१] स्यादध्यक्षा[१]-धिकृतौ[२] समौ।
पौरोगवः[१] सूदाध्यक्षः[२] सूद[१]स्त्वौदनिको[२] गुणः[३] ॥३८६॥
भक्तकारः[४] सूपकारः[५] सूपा[६]-रालिक[७]-वल्लवाः[८]।
भौरिकः[१] कनकाध्यक्षो[२] रूप्याध्यक्ष[१]स्तु नैष्किकः[२] ॥३८७॥
स्थानाध्यक्षः[१] स्थानिकः[२] स्यात् शुल्काध्यक्ष[१]स्तु शौल्किकः[२]।

---

(१) हैमो विकारो हैमम्।

(२) प्रधानमव्ययं कोषविदः "महामात्राः प्रधानं स्यादिति" [illegible]॥

(३) बहुवचनं राजविशादिवर्जकं वा।

(१)शुल्कस्तु[1] घट्टादिदेयं धर्माध्यक्षस्तु[1] धार्मिकः[2] ॥ २८८ ॥
धर्माधिकरणी[2] चाथ हट्टाध्यक्षो[1]ऽधिकर्म्मिकः[2] ।
चतुरङ्गबलाध्यक्षः[1] सेनानी[2] र्दण्डनायकः[3] ॥ २८९ ॥
स्यायुक्तो[1]ऽधिकृतो ग्रामे गोपो[1] ग्रामेषु भूरिषु ।
स्थाता मन्तःपुराध्यक्षे ऽन्तर्वंशिका[1]-वरोधिकौ[2] ॥ २९० ॥
शुद्धान्तः[1] स्या दन्तःपुर[2] मवरोधो[3] ऽवरोधनम्[4](२) ।
सौविदल्लाः[1] कञ्चुकिनः[2] स्थापत्याः[3] सौविदा[4] श्च ते ॥ २९१ ॥
षण्ढो[1] वर्षवरः[2] शत्रौ[1] प्रतिपक्षः[2] परो[3] रिपुः[4] ।
शात्रवः[5] प्रत्यवस्थाता[6] प्रत्यनीको[7] ऽभिया[8]त्यऽरी[9] ॥ २९२ ॥

दस्युः[10] सपत्नो[11] ऽसहनो[12] विपक्षो[13]
द्वेषी[14] द्विषन्[15] (३)वैर्य्यि[16] र्हितो[17] जिघांसुः[18] ।
दुर्हृत्[19] परैः पन्थक[20](४)-पन्थिनौ[21] द्विट्[22]
प्रत्यर्थि[23] मित्रा[24] वभिमात्य[25]-राती[26] ॥ २९३ ॥

वैरं[1] विरोधो[2] विद्वेषो[3] वयस्यः[1] सवयाः[2](५) सुहृत्[3] ।

---

(१) "स्वं विचिन्त्य धनुर्दरानयं पीड़ितो दुहितृ शुल्कसंस्थया" इति रघुः । शुल्कशब्दो विवाहायवरादुपाद्यः वस्तुवाच्यपि यदाह अजयः "शुल्को घट्टे विवाहाय वरादुपाद्ये च वस्तुनि" महेश्वरोपि "शुल्कं घट्टादिदेये स्याज्जामातृ बन्धकेपि च" बन्धको विवाहाय यदुपाद्यं धनमिति तट्टीका । "घट्टादिदेयं शुल्कोऽस्त्री" इत्यमरोपि ॥

(२) अवरोधशब्दस्य, हिन्दिभाषायां "महल" इति ख्यातस्य ॥

(३) द्विषन्तौ द्विषन्तः ॥

(४) परिपन्थिनौ परिपन्थिनः, परिपन्थिषु १ परिपन्थी २ 'पथ्युपागतौ' [illegible] ॥

(५) सवयसौ सवयसः, सुहृदौ सुहृदः ॥

स्निग्धः[४] सहचरो[५] मित्रं[१] सखा[३] सख्यं[१] तु सौहृदम्[२] ॥३९४॥
सौहार्दं[३] साप्तपदीन[४]-मैत्र्य[५](१) अजर्य्यं[६] सङ्गतम्[७]।
आनन्दनं[१] तु आप्रच्छन्नं[२] स्यात् सभाजन[३]मित्यपि ॥३९५॥
विषयानन्तरो राजा शत्रु[१] मित्र[१] मतःपरम्।
उदासीनः[१] परतरः पार्ष्णिग्राह[१]स्तु पृष्ठतः ॥३९६॥
अनुवृत्ति[१]स्त्वनुरोधो[२] हेरिको[१] गूढपूरुषः[२]।
प्रणिधि[३]र्यथार्हवर्णो[४]ऽवसर्पो[५] मन्त्रवि[६]च्चरः[७] ॥३९७॥
वार्त्तायनः[८] स्पश[९]श्चार[१०] आप्त[१]-प्रत्ययितौ[२] समौ।
सत्त्रिणि[१](२) स्याद् गृहपति[२] दूतः[१] सन्देशहारकः ॥३९८॥
(३)सन्धि[१]-विग्रह[२]-यानान्या[३]सन[४] द्वैधा[५]-श्रया[६] अपि।
षड्गुणाः[१]शक्तय[१]स्तिस्रः प्रभुत्वो[१]-त्साह[२]-मन्त्र[३]-जाः(४)॥३९९॥
(५)साम[१]-दान[२]-भेद[३]-दण्डा[४]उपायाः[१] साम[१](६)सान्त्वनम्।
उपजापः[२][१] पुन भेदो[२] दण्डः[१]स्यात् साहसं[२] दमः[३]॥४००॥
प्राभृतं[१] ढौकनं[२] लञ्चो[३]त्कोचः[४] कौशलिका[५]-मिषे[६]।

---

(१) मैत्री नदीवत्, मैत्र्यमित्यपि क्लीबे ॥

(२) सत्त्री सत्त्रिणौ सत्त्रिणः ॥

(३) षड्गुणानमेकैकम् ॥

(४) प्रभुत्वोत्साह मन्त्रभवा इत्यर्थः, एभि स्त्रिभिः तत्र कोशः भाण्डागारः दुर्गः कोट्टः दण्डसम्पत्तिः सैन्यम् प्रभुशक्तिः १ उद्यम्य सहनं उत्साहशक्तिः २ पराक्रमसम्पत् इत्यर्थः मन्त्रः पञ्चाङ्गो मन्त्रशक्तिः विभागसम्पत् इत्यर्थः ३ एषां तिसृणां शक्तिरिति नामेत्यर्थः ॥

(५) एकैकमुपायानाम् ॥

(६) सामनी सामानि ॥

पा चारः[७] प्रदाने[८] ह्या[९] हारो[१०] ग्राह्या[११]-यने[१२] ऽपि(१) ॥४·१॥

(२)मायो[१]-पेक्षे[२]-न्द्रजालानि[३] क्षुद्रोपाया[१] इमे त्रयः ।

(३)मृगया[१]ऽक्षाः[२] स्त्रियः[३] पानं[४] वाक्पारुष्या[५]-र्थदूषणे[६] ॥४·२॥

दण्डपारुष्य[७]मित्येत द्धेयं व्यसन[१]-सप्तकम् ।

पौरुषं[१] विक्रमः[२] शौर्यं[३] शौण्डीर्यं[४](४) च पराक्रमः[५] ॥४·३॥

यत् कोशदण्डजं तेजः(५) स प्रभावः[१] प्रताप[२]-वत् ।

भिया धर्मार्थकामैश्च परीक्षा या तु सोपधा[१](६) ॥४·४॥

त मन्त्राद्य षड्क्षीणं[१] यत्तृतीयाद्यगोचरः ।

रहस्यालोचनं मन्त्रो[१](७) रहो[१] च्छन्न[२]मुपह्वरम्[३] ॥४·५॥

---

(१) उपचारः १ उपप्रदानम् २ उपदा ३ उपहारः ४ उप-ग्राह्यम् ५ उपायनम् ६ ॥

(२) एकैकम् । मायारूपपरावर्त्तनादिका, उपेक्षाऽनवधारणम्, इन्द्रजालं मन्त्र द्रव्यहस्तप्रयोगादिना असम्भववस्तुदर्शनम्, एषां क्रमेण मायोपेक्षेन्द्रजालानि क्षुद्रा अल्पा उपायाः ॥

(३) एकैकम् । अक्षाः पाशका अत्र तैरुपलक्षितं द्यूतं ज्ञेयम् ॥ पानं मद्यादेः ॥ वाक्पारुष्यं कर्कशवचनम् ॥ अर्थस्य दूषणं तच्चतुर्धा अदानम् १ आदानम् २ विनाशः ३ परित्यागश्च ४ ॥ अर्थस्य दण्डेन पारुष्यं दण्डपारुष्यं तीक्ष्णदण्डता ॥ एते सप्त व्यसनानि उच्यन्ते ॥

(४) शौण्डीरस्य भावः कर्म वा शौण्डीर्यं शौटीर्यम् इति वा ॥

(५) तेज इति प्रभुत्वशक्ति भवमुत्कटत्वं तेजसी तेजांसि ॥

(६) धर्मकामार्थभयोपन्यासेन अमात्यानामाशयान्वेषणम् उपधा इत्युच्यते ॥

(७) मन्त्रः पञ्चाङ्गः । यत्कौटल्यः । कर्मणामारम्भोपायः १ पुरुषद्रव्यसम्पत् २ देशकालविभागः ३ विनिपातप्रतीकारः ४ कार्यसिद्धिः ५ इति पञ्चाङ्गो मन्त्रः ॥

विविक्त[४]-विजनै[५]-कान्त[६]-निःशलाकानि[७] केवलम्[८] ।
गुह्यं[१] रहस्यं[२] न्याय[१]स्तु देशरूपं[२] समञ्जसम्[३] ॥४०६॥
कल्प[३]-भ्रेषौ[४] नयो[५] न्याय्यं[१] तु चितं[२] युक्तं[३]-साम्प्रते[४] ।
लभ्यं[५] प्राप्तं[६] भजमाना[७]-भिनीतौ[८]-पयिकानि[९] च ॥४०७॥
प्रक्रिया[१]त्व धिकारो[२]ऽथ मर्य्यादा[१] धारणा[२] स्थितिः[३] ।
संस्था[४]ऽपराध[१]स्तु मन्तु[२]र्व्यलीकं[३] विप्रिया[४]-गसी[५] ॥४०८॥
बलिः[१] करो[२] भागधेयो[३] द्विपाद्यो[१] द्विगुणो दमः ।
वाहिनी[१] पृतना[२] सेना[३] बलं[४] सैन्य[५]मनीकिनी[६] ॥४०९॥
कटकं[७] ध्वजिनी[८] तन्त्रं[९] दण्डो[१०]ऽनीकं[११] पताकिनी[१२] ।
वरूथिनी[१३] चमू[१४]श्चक्रं[१५] स्कन्धावारो[१६]ऽस्य तु स्थितिः ॥४१०॥
शिबिरं[१] रचना तु स्यात् व्यूहो[१] दण्डादिको युधि(१) ।
प्रत्यासारो[१] व्यूहपार्ष्णिः[१] सैन्यपृष्ठे प्रतिग्रहः[२](२) ॥४११॥
एकेभै करथाः त्र्यश्वा पत्तिः[१] पञ्चपदातिका ।
सेना[२] सेनामुखं[३] गुल्मो[४] वाहिनी[५] पृतना[६] चमूः[७] ॥४१२॥
अनीकिनी[८] च पत्तेः स्यादिह भाद्यै स्त्रिगुणैः क्रमात्(३) ।

---

(१) युधि संग्रामनिमित्तं सैन्यानां रचना (विन्यासविशेषः) व्यूहः ॥

(२) पश्चादासरतीति प्रत्यासारः सैन्यरचनायाः पश्चाद्भाग इत्यर्थः ॥

(३) महाभारतम् । "एको रथो गजश्चैको नराः पञ्चपदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते"॥ पत्तेः सर्व्वास्त्रिभि र्गजरथाश्वपदा-
भि क्रमेण त्रिगुणितैः सेनादीनि नामानि क्रमेण भवन्ति । तेन पत्ति
स्त्रिगुणा सेना १ सेना त्रिगुणा सेनामुखं २ सेनामुखं त्रिगुणं गुल्मः ३
गुल्मस्त्रिगुणो वाहिनी ४ वाहिनी त्रिगुणा पृतना ५ पृतना त्रिगुणा

स्रोतोऽञ्जनं[1] तु कापोतं[2] सौवीरं[3] कृष्ण[4]-यामुने[5] ॥११७॥
अथ तुत्थं[1] शिखिग्रीवं[2] तुत्थाञ्जन[3]-मयूरके[4] ।
मूषातुत्थं[1] कांस्यनीलं[2] हेमतारं[3] वितुन्नकम्[4] ॥११८॥
स्यात् तु कर्परिकातुत्थं[1] अमृतासङ्ग[2] मञ्जनम्[3] ।
रसगर्भं[1] तार्क्ष्यशैलं[2] तुत्थे दार्वीरसोद्भवे ॥११९॥
पुष्पाञ्जनं[1] रीतिपुष्पं[2] पौष्पकं[3] पुष्पकेतु[4] च(1) ।
माक्षिकं[1] तु कदम्बः[2] स्यात् चक्रनामा[3] ऽजनामकः[4] ॥१२०॥
ताप्यो[1] नदीजः[2] कामारि[3] स्तारारि[4]र्विटमाक्षिकः[5] ।
सौराष्ट्री[1] पार्वती[2] काक्षी[3] कालिका[4] पर्पटी[5] सती[6] ॥१२१॥
आढकी[7] तुवरी[8] कंसोद्भवा[9] काच्छी[10] मृदा[11]-ह्वया(2) ।
कासीसं[1] धातुकासीसं[2] खेचरं[3] धातुशेखरम्[4] ॥१२२॥
द्वितीयं पुष्पकासीसं[1] कंसकं[2] नयनौषधम्[3] ।
गन्धाश्मा शुल्व[2]-पामा[3]-कुष्ठा-रि[4](3) र्गन्धिक[5] गन्धकौ[6] ॥१२३॥
सौगन्धिकः[7] शुकपुच्छो[8] हरितालं[1] तु पिञ्जरम्[2] ।
त्रिशालकं[3] विस्रगन्धि[4] खर्जूरं[5] वंशपत्रकम्[6] ॥१२४॥
आल[7]-पीतन[8]-तालानि[9] गोदन्तं[10] नटमण्डनम्[11] ।
वङ्गारि[12]र्लोमहृ[13]च्चाथ मनोगुप्ता[1] मनःशिला[2] ॥१२५॥
करवीरा[3] नागमाता[4] रोचनी[5] रसनेत्रिका[6] ।
नेपाली[7](4) कुनटी[8] गोला[9] मनोह्वा[10] नागजिह्विका[11] ॥१२६॥

---

(1) पुष्पकं पुष्पकेतु इति नामद्वयमपि पदच्छेदभेदात् साधु ज्ञेयं ॥
(2) मृदः आह्वयो यस्याः तेन मृत्तिका मृत्सा मृत्स्ना इत्यादि ॥
(3) शुल्वारिः । पामारिः कुष्ठारिः ॥
(4) नैपाली. कि. १ ॥

सिन्दूरं[१] नागजं[२] नागरक्तं[३] शृङ्गारभूषणम्[४] ।
चीनपिष्टं[५] हंसपादं[१]-कुरुविन्दे[२] तु हिङ्गुलः[३] ॥१२७॥
शिलाजतु[१] स्याद्द्रिजं[२] मर्थ्यं[३] गैरेय[४] मश्मजम्[५] ।
क्षारः[१] काचः[२] कुलाली[१] तु स्याच्चक्षुष्या[२] कुलत्थिका[३] ॥१२८॥
बोलो[१] गन्धरसः[२] प्राणः[३] पिण्डो[४] गोपरसः[५] शशः[६] ।
रत्नं[१] वसु[२] मणि[३](१) स्तत्र वैदूर्य्यं[१] बालवायजम्[२] ॥१२९॥
मरकतं[१] त्वश्मगर्भं[२] गारुत्मतं[३] हरिन्मणिः[४] ।
पद्मरागो[१] लोहितक[२]-लक्ष्मीपुष्पा[३]-रुणोपलाः[४] ॥१३०॥
नीलमणि[१] स्त्विन्द्रनीलः[२] सूचीमुखं[१] तु हीरकः[२] ।
वराटकं[३] रत्नमुख्यं[४] वज्रपर्य्यायनाम[५] च ॥१३१॥
विराटजो[१](२) राजपट्टो[२] राजावर्त्तो[३]ऽथ विद्रुमः[१] ।
रक्ताङ्गो[२] रक्तकन्द[३]श्च प्रवालं[४] हेमकन्दलः[५] ॥१३२॥
सूर्यकान्तः[१] सूर्यमणिः[२] सूर्य्याश्मा[३] दहनोपलः[४] ।
चन्द्रकान्त[१]श्चन्द्रमणि[२]श्चान्द्र[३]श्चन्द्रोपल[४]श्च सः ॥१३३॥
क्षीरतैलस्फटिकाख्या मन्यौ खस्फटिका[१] विदौ ।
शुक्तिजं[१] मौक्तिकं[२] मुक्ता[३] मुक्ताफलं[४] रसोद्भवम्[५](३) ॥१३४॥

इति पृथ्वीकायः ॥

---

(१) "वैदूर्य्यम्" इत्यपि । मणी इत्यपि केचन्तः, मणिकः माणिक्यम् एतान्यप्यत्र, चतुर्विधा रत्नजातिः यद्वाचस्पतिः "हीरकं[१] मौक्तिकं २ स्वर्णं ३ रजतं ४ चन्दनानि च ५ शङ्ख ६ चर्म्म च ७ रत्नं ८ चेत्यष्टौ स्यू रत्नजातयः" ॥

(२) विराटदेशोद्भवरत्नस्य विराटज हीरकस्य वा ॥

(३) हस्तिमस्तकाद्युद्भवमपि मौक्तिकमुच्यते यदाह "हस्तिमस्तकै

## अथाप्कायः।

नीरं[1] वारि[2] जलं[3] दकं[4] क[5]मुदकं[6] पानीय[7]मम्भः[8] कुशं[9] तोयं[10]
जीवनं[11]-जीवनीय[12]-सलिला[13]-र्णांस्य[14]प्[15]वाः[16] शम्बरम्[17]।
(1)क्षीरं[18] पुष्कर[19]-मेघपुष्प[20]-कमला[21]न्यापः[22](2) पयः[23]-
पाथसी[24], कीलालं[25] भुवनं[26] वनं[27] घनरसो[28] यादोनिवासो[29]
ऽमृतम्[30] ॥ १३५ ॥
कुलीनसं[1] कबन्धं[2] च प्राणदं[3] सर्वतोमुखम्[4]।
अस्थाघा[1] ऽस्थाग[2]मस्ताघ[3] मगाधं[4] चा ऽतलस्पृशि[5] ॥१३६॥
निम्नं[1] गभीरं[2] गम्भीर[3] मुत्तानं[1] तद्विलक्षणम्।
अच्छं[1] प्रसन्ने[2] ऽनच्छं[1] स्यादाविलं[2] कलुषं[3] च तत् ॥१३७॥
अवश्याय[1]स्तु तुहिनं[2] प्रालेयं[3] मिहिका[4] हिमम्[5]।
स्यान्नीहार[6]स्तुषार[7]श्च हिमानी[1] तु महद्धिमम् ॥१३८॥
(2)पारावारः[1] सागरो[2] ऽवारपारो[3]
ऽकूपारो[4]-दध्य[5]-र्णवा[6] वीचिमाली[7]।

---

दन्तौ तु दंष्ट्रासु च वराहयोः। मेघो भुजङ्गमोऽवेणुर्मत्स्यो मौक्तिकयोनयः" इति। मौक्तिकानां हि नानाविधत्वस्थावरशरीरेषु उत्पत्तिसद्भावेऽपि पृथिवीकायत्वमेव, धर्मगिरः सुमणयः करिदन्तेषु मौक्तिकानि विकलेन्द्रियेषु शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि वेणवादिषु तान्येवेति वचनात् न दुष्टं मौक्तिकानां पृथ्वीकायत्वम् ॥

(1) क्षीर धवलः स्फटिकः क्षीरस्फटिकः तैलकान्तिः स्फटिकः तैलस्फटिकः ताभ्यामन्यौ भिन्नवर्णौ इमौ सूर्यकान्त चन्द्रकान्तौ द्वावपि स्फटिकाख्याविव्यर्थः ॥

(2) आपः स्त्रीलिङ्गो बहुवचनान्तः ॥ (3) परापारोऽपि ॥

याद:[8]-स्रोतो[9]-वा-नदी[10]-श:[11] (1) सरस्वान्

सिन्धु[12]-रुदन्वान्[14] मितद्रुः[15] समुद्रः[16] ॥१३९॥

आकरो[17] मकर-रत्ना-ज्जला न्निधि[19]-धि[20]-राशयः[21] (2) ।

द्वीपान्तरा असङ्ख्याः स्युः सप्तैवेति तु लौकिकाः ॥१४०॥

लवण[1]-क्षीर[2]-दध्या[3]-ज्य[4]-सुरे[5]-क्षु[6]-स्वादु[7]-वारयः (3) ।

तरङ्गो[1] भङ्गो[2]-वीच्यू[3]-र्म्यु[4]-त्कलिका[5] मरुति त्विह ॥१४१॥

लहर्यु[1]ल्लोल[2]-कल्लोला[3] आवर्त्तः[1] पयसां भ्रमः ।

तालूरो[2] ऽतकरस्था सौ वेला[1] स्यात् वृद्धि रम्भसः ॥१४२॥

(4) डिण्डीरो[1] ऽब्धिकफः[2] फेनो बुद्बुद[1]-स्थासकौ[2] समौ ।

मर्य्यादा[1] कूलभूः कूलं[1] प्रपातः[2] कच्छ[3]-रोधसी[4] ॥१४३॥

---

(1) यादईशः १ स्रोतईशः २ वारीशः ३ नदीशः ४ ।

(2) मकराकरः १ रत्नाकरः २ यौगिकत्वात् मकरालयः रत्नराशिः जलनिधिः १ जलधिः २ जलराशिः ३ । यौगिकत्वात् वारिराशिः वारिधिः इत्यादयोऽप्युह्याः ।

(3) लवणादयो वारि येषां ते यथा लवणवारि लवणोद समुद्रः १ क्षीरवारि क्षीरोदसमुद्रः २ दधिवारि दध्युदसमुद्रः ३ आज्यवारि घृतोदसमुद्रः ४ सुरावारिः सुरोदसमुद्रः ५ इक्षुवारिः इक्षूदसमुद्रः ६ स्वादुवारिः स्वादूदसमुद्रः ७। यदाहुः "लवणो १ रसमयः २ सुरोदकः ३ सार्पिषो ४ दधिजलः ५ पयः पयाः ६ स्वादु ७ वारि इदधियं सप्तमस्तान् परीत्यत इमे व्यवस्थिताः" इति ॥

(4) डीङ् विहायसांगतौ भ्वादिरात्मनेपदी डयते अवाघातै-रिति डिण्डीरः गम्भीरगभीरेति सूत्रेण डीडोडिच् ईरीहित्वं पूर्व-स्यनोन्तश्च उज्ज्वलदत्तस्तु डिण्ड गत्यादरयोः बाहुलकादतोऽपि इरन् प्रत्यये डिण्डते इतस्ततो गच्छतीति डिण्डीरः इत्याह ॥

तटं[5] तीरं[6] प्रतीरं[7] च पुलिनं[1] तज्जलोज्झितम् ।
सैकतं[2] वा समीपं[1] तु द्वीप[2]मन्तर्जले तटम् ॥१४४॥
तत् परं पार[1]मवारं[1]त्वर्वाक् पात्रं[2] तदन्तरम् ।
नदी[1] हिरण्यवर्णा[2] स्याद्रोधोवक्रा[3] तरङ्गिणी[4] ॥१४५॥
सिन्धुः[5] शैवलिनी[6] वहा[7] च ह्रादिनी[8] स्रोतस्विनी[9] निम्नगा[10] ।
स्रोतो[11](1) निर्झरिणी[12] सरि[13]च्च तटिनी[14] कूलङ्कषा[15] वाहिनी[16] ।
कर्षू[17] द्वीपवती[18] समुद्रदयिता[19]-धुन्यौ[20] स्रवन्ती[21]-सरस्वत्यौ[22] पर्व्वतजा[23]ऽपगा[24] जलधिगा[25] कुल्या[26] वजम्बालिनी[27] ॥१४६॥
गङ्गा[1] त्रिपथगा[2] भागीरथी[3] त्रिदशदीर्घिका[4] ।
त्रिस्रोता[5] जाह्नवी[6] मन्दाकिनी[7] भीष्म[8]-कुमारसूः[9](2) ॥१४७॥
सरिद्वरा[10] विष्णुपदी[11] सिद्ध[12] स्वः[13] स्वर्गि[14]-खापगा[15](3) ।
ऋषिकुल्या[16] हैमवती[17] स्वर्वापी[18] हरशेखरा[19] ॥१४८॥
यमुना[1] यमभगिनी[2] कालिन्दी[3] सूर्य्यजा[4] यमी[5] ।
रेवे[1]न्दुजा[2] पूर्व्वगङ्गा[3] नर्म्मदा[4] मेखलाद्रिजा[5] ॥१४९॥
गोदा[1] गोदावरी[2] तापी[1] तपनी[2] तपनात्मजा[3] ।
शुतुद्रि[1]स्तु शतद्रुः[2] स्यात् कावेरी[1] त्वर्द्धजाह्नवी[2] ॥१५०॥
करतोया[1] सदानीरा[2] चन्द्रभागा[1] तु चन्द्रिका[2] ।

---

(१) स्त्री, स्रोतसी स्रोतांसि ॥
(२) चमूवद्रूपाणि भीष्मसूः १ कुमारसूः २ ॥
(३) सिद्धापगा १ स्वरापगा २ स्वर्ग्यापगा ३ खापगा ४ ॥

वाशिष्ठी[१] गोमती[२] तुल्ये ब्रह्मपुत्री[१] सरस्वती[२] ॥१५१॥
(१)विपाट्[१] विपाशा[२]ऽर्जुनी[१] तु बाहुदा[२] सैतवाहिनी[३] ।
वैतरणी नरकस्था[१]ऽथ स्रोतो[१]ऽम्भःसरणं स्रवः ॥१५२॥
प्रवाहः[१] पुनरोघः[२] स्याद् वेणी[३] धारा[४] रयश्[५] च सः ।
घट्टस्[१] तीर्थो[२]ऽवतारो[३]ऽम्बुवृद्धौ पूरः[१] प्लवो[२]ऽपि च ॥१५३॥
पुटभेदास्[१] तु वक्राणि[२](२) भ्रमास्[१] तु जलनिर्गमाः ।
परीवाहा[१] जलोच्छ्वासाः[२] कूपकास्[१] तु विदारकाः[२] ॥१५४॥
प्रणाली[१](३) जलमार्गोऽथ पाणं[१] कुल्या[२] च सारणिः[३] ।
सिकता[१](४) वालुका बिन्दौ[१] पृषत्[२]-पृषत[३]-विप्रुषः[४](५) ॥१५५॥
जम्बालो[१]-चिकिलौ[२] पङ्कः[३] कर्दमश्[४] च निषद्वरः[५] ।
शादो[६] हिरण्यवाहस्[१] तु शोणो[२] नदे[१] पुनर्वहः[२] ॥१५६॥
भिद्यो[३] उध्यः[४] सरस्वां[५] च दृहो[१]ऽगाधजलो[२] ह्रदः[३] ।
कूपः[१] स्यादुदपानोऽन्धुः[३] प्रहि[४]र्नेमी[१] तु तत् त्रिका[२](६) ॥१५७॥

---

(१) विपाशौ विपाशः स्त्री ।

(२) "वक्रः कुटिले क्रूरे पुटभेदे शनैश्चरे" इति महेश्वरः । चक्राणीत्यपि यन्महेश्वरः "चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि । अम्भसामपि चावर्ते" इति ॥

(३) त्रिषु ॥

(४) बहुवचनान्तः, "वालिका वालुका बाला पिञ्छाला कर्णभूषणे" इति महेश्वरः ॥

(५) "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इत्यमरः । पृषतौ पृषन्तौ क्लीबौ, विप्रुट् विप्रुषौ स्त्री ॥

(६) कूपमुखबन्धनस्य ॥

नान्दीमुखो[1] नान्दीपटो[2] वीनाहो[3] मुखबन्धने ।
आहावस्तु[1] निपानं[2] (1) स्यादुपकूपे ऽथ दीर्घिका[1] ॥१५८॥
वापी[2] स्यात् क्षुद्रकूपे तु चुरी[1] चुण्डी[2] च चूतकः[3] (2) ।
उद्घाटकं[1] घटीयन्त्रं[2] (3) पादावर्त्तो[1] ऽरघट्टकः[2] ॥१५९॥
अखातं[1] तु देवखातं[2] पुष्करिण्यां[1] तु खातकम्[2] ।
पद्माकर[1]स्तडागः[2] स्यात्[(4)] कासारः[3] सरसी[4] सरः[5] ॥१६०॥
वेशन्तः[1] पल्वलो[2] ऽल्पं तत् परिखा[1] खेय[2]-खातिके[3] ।
स्यादालवाल[1]मावालं[2] (5) आवापः[3] स्थानकं[4] च सः ॥१६१॥
आधार स्तु समौ वन्धौ[1] निर्झर[1] स्तु झरः[2] सरिः[3] ।
उत्सः[4] स्रवः[5] प्रस्रवणं[6] जलधारा[1]जलाशयाः[2] ॥१६२॥

इत्यप्कायः ।



## अथ तेजस्कायः ।

वह्नि[1] र्दहनः कृशानु[2] र्हिरण्यरेतसौ[3]
धनञ्जयो[4] हव्य[5]-हवि[6]-र्हुताशनः (6) ।

(1) पश्वादीनां पानार्थं शिलादिभिः कूपसमीपे निर्म्मितम् ॥

(2) "चूतकां नीरसं पीत्वा पान्था पथिमुखं ययुः" इति माघः ॥

(3) येन कूपादेर्जलमूर्द्धं वाह्यते तद्यन्त्रस्य ॥

(4) तडाक इत्यन्ये ॥

(5) आवालं समते लोकनिघण्टुः, व्याडिस्तु "आवालो जल-पिण्डिस्तु" इति पुंस्याह ॥

(6) हव्याशनः १ हविरशनः २ हुताशनः ३ ॥

(१)कृपीटयोनि[८]र्दमुना[९](२) विरोचना[१०]-

-शुशुक्षणी[११] छागरथ[१२]स्तनूनपात्[१३](३) ॥१६३॥

कृशानु[१४]-वैश्वानर[१५]-वीतिहोत्रा[१६]

हुताशनः[१७] पावक[१८]-चित्रभानू[१९] ।

(४)अप्पित्त[२०]-धूमध्वज[२१]-कृष्णवर्त्मा[२२]-

ऽर्चिष्म[२३](५) च्छमीगर्भ[२४]-तमोघ्न[२५]-शुक्राः[२६] ॥१६४॥

शोचिष्केशः[२७] शुचि[२८]-हुतवहौ[२९]-षर्बुधाः[३०]-सप्त[३१]-मन्त्र[३२]-ज्वाला-जिह्वो[३३](६) ज्वलन[३४]-शिखिनौ[३५] जागृवि[३६] र्जात-वेदाः[३७](७) ।

बर्हिःशुष्मा[३८](८) ऽनिलसख[३९]-वसू[४०] रोहिताश्वा[४१]-श्रयाशौ[४२]

(९)बर्हिर्ज्योति[४३] र्दहन[४४]-बहुलौ[४५] हव्यवाहो[४६] ऽनलो[४७] ऽग्निः[४८] ॥१६५॥

---

(१) कृपीटं जलं योनिरस्य यत स्मृतिः, अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमिति ॥

(२) दमुनाः दमुनसौ दमुनसः दमूनाः इति । दीर्घोऽप्युकारः ॥

(३) तनूनपातौ तनूनपातः ॥

(४) अप्पित्तवर्जा एते सर्व्वे पुंसि वह्निपर्य्यायाः ॥

(५) कृष्णवर्त्मानौ कृष्णवर्त्मानः, अर्चिष्मान् अर्चिष्मन्तौ अर्चिष्मन्तः, अत्र नस्तं पदमध्य इति पदप्रतिषेधात् नाम्यन्तस्थेति सकारस्य षत्वम् ॥ (६) सप्तजिह्वः १ मन्त्रजिह्वः २ ज्वालाजिह्वः ३ ॥

(७) शिखी शिखिनौ शिखिनः, जागृविः हरिवत् जातवेदस् शान्तः ॥ (८) बर्हिःशुष्माणौ बर्हिःशुष्माणः ॥

(९) बर्हिर्ज्योतिषौ बर्हिर्ज्योतिषः, बर्हिषौ बर्हिषः, बर्हिरि-दन्तनामापि ॥

विभावसुः[१९] सप्तो-दर्चिः[२०](१) स्वाहा[१]ऽग्ना[२]यीप्रिया ऽस्य च ।
और्वः[१] संवर्त्तको[२] ऽब्ध्यग्नि[३] र्वाडवो[४] वडवामुखः[५] ॥१६६॥
दवो[१] दावो[२] वनवह्नि[३] र्मेघवह्नि[१] रिरम्मदः[२] ।
छागणा[१]स्तु करीषाग्निः[२] कुकूल[१]स्तु तुषानलः[२] ॥१६७॥
सन्तापः[१] सञ्ज्वरो[१] बाष्प[१] ऊष्मा[२] जिह्वाः स्यु रर्चिषः[१](२) ।
हेतिः[१] कीला[२] शिखा[३] ज्वाला[४]ऽर्चि[५]र्भा[६] मञ्जरी[७] मन्दसो ॥१६८॥
स्फुलिङ्गो[१] ऽग्निकणो ऽलातज्ज्वालो ल्का[१]ऽलात[१]मुल्मुकम्[२] ।
धूमः[१] स्या द्वायुवाहो[२] ऽग्निवाहो[३] दहनकेतनम्[४] ॥१६९॥
अभ्रंकषः[५] करमाल[६]श्च शरी[७] जीमूतवाह्य[८]पि[३] ।
तडि[१]दैरावती[२] विद्यु[३]च्चला[४] शम्पा[५] ऽचिरप्रभा[६] ॥१७०॥
आकालिकी[७] शतह्रदा[८] चञ्चला[९] चपला[१०] ऽशनि[११] ।
सौदामिनी[१२] क्षणिका[१३] च ह्रादिनी[१४] जलवालिका[१५] ॥१७१॥

इति तेजस्कायः ।



## अथ वायुकायः ।

वायुः[१] समीर-समिरौ[३] पवना[४]-शुगौ[५] नभः-
स्वातो[६] नभस्व[७](४)-दनिल[८]-श्वसना[९] समीरणाः[१०] ।

(१) सप्तार्चिषौ सप्तार्चिषः, उदर्चिषौ उदर्चिषः, स्वाहा गङ्गावत् अव्ययमपि ॥

(२) ऊष्माणौ ऊष्माणः, स्त्री क्लीबे, स्त्रियां अर्चिः अर्चिषौ अर्चिषः, क्लीबे अर्चिः अर्चिषी अर्चींषि । अर्चिः इति हलन्तोस्वरान्तोऽपि ॥

(३) जीमूतवाहिनौ जीमूतवाहिनः ॥

(४) नभस्वान् नभस्वन्तौ ॥

वातो[11]ऽहिकान्त[12]-[illegible]मान[13]-मरु[14]-त्प्रकम्पनाः[15]
कम्पाक[16]-नित्यगति[17]-गन्धवह[18]-प्रभञ्जनाः[19] ॥१७२॥
मातरिश्वा[20] जगत्प्राणः[21] पृषदश्वो[22] महाबलः[23] ।
मारुतः[24] स्पर्शनो[25] दैत्यदेवो[26], झञ्झा[1]ऽम्बु-वृष्टियुक् ॥१७३॥
प्राणो[1] नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः ।
अपानः[1] पवनो मन्या[(1)] पृष्ठपृष्ठान्तपार्ष्णिगः ॥१७४॥
समानः[1] सन्धिहृन्नाभिषूदानो[1] हृच्छिरोऽन्तरे ।
सर्वत्वग्वृत्तिको व्यान[1] इत्यङ्गे पञ्च वायवः ॥१७५॥

इति वायुकायः ।



अरण्य[1]मटवी[2] सत्रं[3] वार्क्षं[4] च गहनं[5] झषः[6] ।
कान्तारं[7] विपिनं[8] कक्षः[9] स्यात् षण्डं[10] काननं[11] वनम्[12] ॥१७६॥
दवो[13] दावः[14], प्रस्तार[1]स्तु तृणाटव्यां[2] झषो[3]ऽपि च ।
अपो-पाभ्यां वनं[2(2)] वेल[3]मारामः[4] कृत्रिमे वने ॥१७७॥
निष्कुट[1]स्तु गृहारामो, बाह्यारामस्तु पौरकः[2] ।
आक्रीडः[1] पुन उद्यानं[2] राज्ञां त्वन्तःपुरोचितम् ॥१७८॥
तदेव प्रमदवन[1]ममात्यादेस्तु निष्कुटे।
वाटी[1(3)] पुष्पा वृक्षा चासौ[(4)] क्षुद्रारामः प्रसीदिका[1] ॥१७९॥

(1) मन्या ग्रीवापश्चाद्भागः ॥

(2) अपवनम् १ उपवनम् २ ॥

(3) वाटस्तु वर्त्मनि वृतौ वाटी स्याद्गृहनिष्कुटे इति श्रीधरः ॥

(4) पुष्पवाटी १ वृक्षवाटी २ वाटी शब्द इत्यर्थः ॥

वृक्षो[1]ऽग[2]शिखरी[3]च शाखि[4]-फलदा[5]द्रि[6]र्हरिद्रु[7]र्द्रुमो[8]
जीर्णो[9] द्रु[10] र्विटपी[11] कुठः[12](1) क्षितिरुहः[13]कारस्करो[14]
विष्टरः[15]।
मन्थावर्त्ती[16]-करालिको[17] तरु[18]-वसू[19] पर्णी[20] पुलाक्यं[21]
शिम्रुपः[22]साला[23]-नोकह[24]-गच्छ[25]-पादप[26]-नगा[27]रूक्षा[28]-
गमौ[29] पुष्पदः[30] ॥१८०॥

कुञ्ज[1]-निकुञ्ज[2]-कुडङ्गाः[3] स्थाने वृक्षै र्वृता-न्तरे।
पुष्पैस्तु फलवान् वृक्षो वानस्पत्यो[1] विना तु तैः ॥१८१॥
फलवान् वनस्पतिः[1] स्यात् फलावन्ध्यः फलेग्रहिः[1]।
फलवन्ध्य स्त्व वकेशी[1]फलवान्[1] फलिनः[2] फली[3] ॥१८२॥
ओषधिः[1] स्या दौषधि[2] श्च फलपाकावसानिका।
क्षुपो[1] ह्रस्वशिफाशाखः प्रतति[1] र्वतति[2] र्लता[3] ॥१८३॥
वल्ली[4] स्यां तु प्रतानिन्यां[1] गुल्मिन्यु[2]-लप[3]-वीरुधः[4]।
स्यात्प्ररोहो[1]ऽङ्कुरो[2]ऽङ्कूरो[3]रोह[4]श्च स तु पल्लवः ॥१८४॥
समुत्थितः स्याद्वल्लिशं[1] शिखा[1]-शाखा[2]-लताः[3] समाः।
साला[1]शाला[2]स्कन्धशाखा[3]स्कन्धः[1]प्रकाण्डमस्तकम् ॥१८५॥
मूलाच्छाखावधि र्गण्डः प्रकाण्डो[1]ऽथ जटा[1] शिफा[2]।
प्रकाण्डरहिते स्तम्बो[1]विटपो[2]गुल्म[3] इत्यपि ॥१८६॥
शिरोनामा[1](2) ऽग्रं[2] शिखरं[3] मूर्द्धा[1] बध्नो[2]ऽङ्घ्रिनामा[3] च।

---

(१) कुठिः: वीत कोठति कुठः। कुठान् वृक्षान् इयर्त्ति कुठारः। जीर्ण इत्यत्र जिर्णः अलः इति पाठान्तरः। [पर्य्याया अस्य ॥

(२) शिरसो नामानि पर्य्यायाः अस्य अग्रेस्य परस्य नामानि

सारो[1] मज्जा[2](1) त्वचि [illegible]ल्ली[1] चोचं[2] वल्कं[4] च वल्कलम्[5] ॥१८७॥
स्थाणुः[1] तु ध्रुवकः[2] शङ्कुः[3] काष्ठं[1] दलिकं[2] दारुणी[3]।
निष्कुहः[1] कोटरो[2] मञ्जा[1] मञ्जरि[2] र्वल्लरि[3]श्च सा ॥१८८॥
पत्रं[1](2) पलाशं[2] छदनं बर्हं[3] पर्णं[4] छदं[6] दलम्[7]।
नवे तस्मिन् किसलयं[1] किसलं[2] पल्लवो[3]ऽस्त्र तु(3) ॥१८९॥
नवे प्रवालो[1]ऽस्य कोशी[1] शुङ्गा[2](4) माढ़ि[1] दलस्नसा।
विस्तार[1]-विटपौ[2] तुल्यौ प्रसूनं[1] कुसुमं[2] सुमम्[3] ॥१९०॥
पुष्पं[4] सूनं[5] सुमनसः[6](5) प्रसवं[7] च मणीवकम्[8]।
जालकं[1]-क्षारकौ[2] तुल्यौ कलिकायां[1] तु कोरकः[2] ॥१९१॥
कुड्मलं[1] मुकुलं[2] गुच्छो[1] गुच्छक[2]-स्तबक[3]-गुत्सकाः[4]।
गुलुञ्छो[5]ऽथ रजः पौष्पं परागो[1]ऽथ रसो मधु[2](6) ॥१९२॥
मकरन्दो[2] मरन्द[3]श्च वृन्तं[1] प्रसवबन्धनम्।

---

(1) मज्जा मज्जानौ मज्जानः, त्वक् त्वग् त्वचौ त्वचः, आबन्तो-ऽपि त्वचा स्त्रियाम् अदन्तोऽपि त्वचः पुंसि इति हलायुधटीका ॥

(2) प्रज्ञाद्यणि पात्रमपि यन्महेश्वरः "पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" इति अयं द्वितकार-एकतकारस्य धातुप्रत्यय-भेदात् ॥

(3) कन्दलमपि त्रिलिङ्गोऽयं "कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे" इति कोषान्तरम् ॥

(4) शुङ्गा आबन्तः-पुं स्त्रीलिङ्गोऽयं यद्वाग्भटः, "वटप्ररोहैः शुङ्गै-ति ॥

(5) बहुवचनान्तः स्त्री ॥

(6) मधु क्लीबे, पुंस्यपीति हलायुधटीका। मकरन्दोऽपि ॥

प्रबुद्धो[1]-ज्जृम्भ[2]-फुल्लानि[3] व्याकोशं[4] विकचं[5] स्मितम्[6] ॥१९३॥
उन्मिषितं[7] विकसितं[8] दलितं[9] स्फुटितं[10] स्फुटम्[11] ।
प्रफुल्लो[12] प्रफल्ल[13]-सम्फुल्लो[14]-च्छ्वसितानि[15] विजृम्भितम्[16] ॥१९४॥
स्मेर[17] विनिद्र[18]-मुन्निद्र[19] विमुन्निद्र[20]-हसितानि[21] च ।
सङ्कुचितं तु निद्राणं[1] मीलितं[2] मुद्रितं[4] च तत् ॥१९५॥
फलं तु सस्यं तच्छुष्कं वानं[1] आमं शलाटु[1] च ।
ग्रन्थिः[1] पर्व[2](1) परु[3] बीजकोशी[1] शिम्बा[2] शमिः[3] शमी[4] ॥१९६॥
शिम्बि[5]श्च पिप्पलो[1]ऽश्वत्थ[2] श्चलदलः[3] कुञ्जराशनः[4] ।
कृष्णावासो[5] बोधितरुः[6] प्लक्ष[1]स्तु पर्कटी[2] जटी ॥१९७॥
न्यग्रोध[1]स्तु बहुपात्[2] स्याद्वटो[3] वैश्रवणालयः[4] ।
उदुम्बरो[1] जन्तुफलो[2] यज्ञाङ्गो[3] हेमदुग्धकः[4] ॥१९८॥
काकोदुम्बरिका[1] फल्गु[2] र्मलयु[3] र्जघनेफला[4] ।
आम्र[1]श्चूतः[2] सहकारः[3] सप्तपर्ण[1]स्तु युक्छदः[2] ॥१९९॥
शिग्रुः[1] शोभाञ्जनो[2]ऽक्षीव[3]-तीक्ष्णगन्धक[4]-मोचकाः[5] ।
श्वेतेऽत्र श्वेतमरिचः[1] पुन्नागः[1] सुरपर्णिका ॥२००॥
बकुलः[1] केसरो[2]ऽशोकः[1] कङ्केल्लिः[2](2) ककुभो[1]ऽर्ज्जुनः[2] ।
मालूरः[1] श्रीफलो[2] बिल्वः[3] किङ्किरातः[1] कुरण्टकः[2] ॥२०१॥
त्रिपत्रकः[1] पलाशः[2] स्यात् किंशुको[3] ब्रह्मपादपः[4] ॥
तृणराज[1]स्तल[2]स्तालो[3] रम्भा[1] मोचा[2] कदल्यपि ॥२०२॥

(१) नान्तः क्ली, परुषो परुरपि क्ली ४

(२) कमुदकं केलति गच्छति कङ्केल्लिः, स्त्रीलिङ्गः यदमरकोषः "स्त्रियां त्वशोके कङ्केल्लिः" पृषोदरादित्वात् २

करवीरो[1] हयमारः[2] कुटजो[1] गिरिमल्लिका[2] ।
निचुलो[1] वेतसः[2] शीतो[3] वानीरो[4] वञ्जुलो[5] रथः[6] ॥२०३॥
(1)कर्कन्धुः[1] कुवली[2] कोली[3] बदर्य[4]थ हलिप्रियः[1] ।
नीपः[2] कदम्बः[3] शाक[1]स्तु क्रकचो[2] ऽरिष्ट[1]स्तु फेनिलः[2] ॥२०४॥
निम्बो[1] ऽरिष्टः[2] पिचुमन्दः[3] समौ पिचुल[1]-झाबुकौ[2] ।
कार्पास[1]स्तु बादरः[2] स्यात् पिचव्य[3] स्तूलकं[1] पिचुः[2] ॥२०५॥
आरग्वधः[1] कृतमाले[2] वृषो[1] वासा[2] ऽटरूषके[1] ।
करञ्ज[1]स्तु नक्तमालः[2] कुहि[1] वैल्वी[2] मल्लातकः[2] ॥२०६॥
महाकाल[1]स्तु किम्पाके[2] मन्दारः[1] पारिभद्रके[2] ।
मधुक[1]स्तु मधुष्ठीलो[2] गुडपुष्पो[3] मधुद्रुमः[4] ॥२०७॥
पीलुः[1] शिनो[2] गुडफलो[3] गुग्गुलु[1]स्तु पलङ्कषः[2] ।
राजादनः[1] पियालः[2] स्यात् तिनिश[1]स्तु रथद्रुमः[2] ॥२०८॥
नागरङ्ग[1]स्तु नारङ्ग[2] इङ्गुदी[1] तापसद्रुमः[2] ।
काश्मरी[1] भद्रपर्णी[2] श्रीपर्ण्य[3]श्चिञ्चिका[1]स्तु तिन्तिडी[2] ॥२०९॥
शेलुः[1] श्लेष्मातकः[2] पीतसाल[1]स्तु प्रियको[2] ऽसनः[3] ।
पाटलिः[1] पाटला[2] भूर्जो[1] बहुलत्वको[2] बहुच्छदः[3] ॥२१०॥
द्रुमोत्पलः[1] कर्णिकारे[2] निचुले[1] हिज्जले[2] ऽम्बुजौ[3] ।
धात्री[1] शिवा[2] ऽऽमलकी[3] कलि[1]रक्षो[2] बिभीतकः[3] ॥२११॥
हरीतक्य[1]भया[2] पथ्या[3] त्रिफला[1] तत् फलत्रयम् ।
तापिच्छ[1]स्तु तमालः[2] स्या चम्पको[1] हेमपुष्पकः[2] ॥२१२॥

---

(1) पुं स्त्री, स्त्रियां कर्कन्धूः कर्कन्धौ कर्कन्धुः ॥

निर्गुण्डी[१] सिन्दुवारे[२] ऽतिमुक्तके[१] माधवी[२] लता[३]।
वासन्ती[४] पौण्ड्रपुष्पं[१] तु जपा[१] जाति[१]स्तु मालती[२]॥२१३॥
मल्लिका[१] स्याद् द्विवार्षिकः[२] सप्तला[१] नवमालिका[२]।
मागधी यूथिका[१] सा तु पीता स्याद् हेमपुष्पिका[१]॥२१४॥
प्रियङ्गुः[१] फलिनी[२] श्यामा[३] बन्धूको[१] बन्धुजीवकः[२]।
करुणो[१] मल्लिकापुष्पो[२] जम्बीरो[१] जम्भ[२]-जम्भलौ[३]॥२१५॥
मातुलुङ्गो[१] बीजपूरः[२] करीर[१]-क्रकरौ[२] समौ।
पञ्चाङ्गुलः[१] स्यादेरण्डे[२] धातक्यां[१] धातुपुष्पिका[२]॥२१६॥
कपिकच्छु[१] रोमगुप्ता[२] धत्तूरः[१] कनकाह्वयः[२]।
कपित्थ[१]स्तु दधिफलो[२] नालिकेर[१]स्तु लाङ्गली[२]॥२१७॥
आम्रातको[१] वर्षपाकी[२(१)] केतकः[१] क्रकचच्छदः[२]।
कोविदारो[१] युगपत्रः[२] सल्लकी[१] तु गजप्रिया[२]॥२१८॥
वंशो[१] वेणु[२] र्वंशफल[३] स्त्वचिसार[४] स्तृणध्वजः[५]।
मस्करः[६] शतपर्वा[७] च स्वनन् वातः स कीचकः[१]॥२१९॥
तुगाक्षीरी[१] वंशक्षीरी[२] त्वक्क्षीरी[३] वंशरोचना[४]।
पूगः[१] क्रमुक[२]-गुवाकौ[३] तस्य ह्यङ्गं[१] पुनः फलम्॥२२०॥
ताम्बूलवल्ली[१] ताम्बूली[२] नागपर्ण्यपि[३(२)]।
तुम्ब्य[१]लाबुः[२(३)] कृष्णला[१] तु गुञ्जा[२] द्राक्षा[१] तु गोस्तनी॥२२१॥
मृद्वीका[२] चारुफला[३] च गोक्षुर[१]स्तु त्रिकण्टकः[२]।

---

(१) वर्षपाकिणी वर्षपाकिणः॥
(२) नागवल्ली फणिलता इत्यादि॥
(३) स्त्री क्ली, द्वावपि॥

श्वदंष्ट्रा[३] स्थलशृङ्गाटो[४] गिरिकर्ण्य[१]ऽपराजिता[२] ॥२२२॥
व्याघ्री[१] निदिग्धिका[२] कण्टकारिका[३] स्याद्याऽमृता[१] ।
वत्सादनी[२] गुडूची[३] च विशाला[१] त्विन्द्रवारुणी[२] ॥२२३॥
उशीरं वीरणीमूले ह्रीवेरं[१] वालकं[२] जलम्[३] ।
प्रपुन्नाट[१]स्त्वेडगजो[२] दद्रुघ्न[३] चक्रमर्दकः[४] ॥२२४॥
लङ्कायां[१] महारजनं[२] कुसुम्भं[३] कमलोत्तरम्[४] ।
लोध्रे[१] तु गालवो[२] रोध्र[३]-तिल्व[४]-शाबर[५]-मार्जनाः[६] ॥२२५॥
मृणालिनी[१] पुटकिनी[२] नलिनी[३] पङ्कजिन्य[४]पि ।
कमलं[१] नलिनं[२] पद्मं[३] अरविन्दं[४] कुशेशयम्[५] ॥२२६॥
परं शतसहस्राभ्यां पत्रं[७](१) राजीव[८]-पुष्करे[९] ।
बिसप्रसूनं[१०](२) नालीकं[११] तामरसं[१२] महोत्पलम्[१३] ॥२२७॥
तज्जलात् सरसः पङ्कात् परैः रुट्-रुह-जन्म-जैः[१४](३) ।
पुण्डरीकं[१] सिताम्भोजं[२] अथ रक्तसरोरुहे[१] ॥२२८॥
रक्तोत्पलं[२] कोकनदं[३] कैरविण्यां[१](४) कुमुद्वती[२](५) ।
उत्पलं[१] स्यात् कुवलयं[२] कुवेलं[३] कुवलं[४] कुवम्[५] ॥२२९॥

---

(१) शतपत्रं १ सहस्रपत्रम् २ ॥

(२) बिसात्प्रसूतं बिसप्रसूतं बिसप्रसूनं बिसप्रसूनमपि इ टीका ॥

(३) जलरुहौ जलरुहि, जलजन्मनि जलजन्मानि, सरोरु सरोजन्मनी पङ्करुहौ, जलरुट् १ जलरुहं २ जलजन्म ३ जलजं सरोरुट् ५ सरोरुहं ६ सरजन्म ७ सरोजं ८ पङ्करुट् ९ पङ्करुहं पङ्कजन्म ११ पङ्कजं १२ ॥

(४) चन्द्रविकाशिन्याः ॥

(५) चन्द्रविकाशी कमलः ॥

श्वेते तु तत्र कुमुदं¹ कैरवं गर्दभाह्वयम्³ ।
नीले तु स्यादिन्दीवरं¹ हल्लकं¹ रक्तसन्ध्यके² ॥२३०॥
सौगन्धिकं¹ तु कह्लारं²⁽¹⁾ बीजकोशो¹ वराटकः² ।
कर्णिका² पद्मनालं¹ तु मृणालं² तन्तुलं³ विसम्⁴ ॥२३१॥
किञ्जल्कं¹ केसरं² संवर्त्तिका¹ तु स्यान्नवं दलम् ।
करहाटः¹ शिफा² च स्यात् कन्दे सलिलजन्मनाम्⁽²⁾ ॥२३२॥
उत्पलानां तु शालूकं¹⁽³⁾ नील्यां¹ शैवाल² शेवले³ ।
शेवालं⁴ शैवलं⁵ शेपालं⁶ जलाच्छूक⁷-नीलिके⁸⁽⁴⁾ ॥२३३॥
धान्यं¹⁽⁵⁾ तु सस्यं² सीत्यं³ च व्रीहि⁴ स्तम्बकरि⁵श्च तत् ।
आशुः¹ स्यात् पाटला² व्रीहि³ र्गर्भपाकी¹⁽⁶⁾ तु षष्टिकः² ॥२३४॥
शालयः¹ कलमाद्याः स्युः कलम¹ स्तु कलामकः² ।
लोहितो रक्तशालिः¹ स्या न्महाशालिः¹ सुगन्धिकः² ॥२३५॥

---

(१) कैरविण्यादि कह्लारान्तं चन्द्रविकासिनि ॥

(२) कन्दं मूले तत् हैमानेकार्थः "कन्दोऽब्दे सूरणे वस्नमूले" इति ॥

(३) उत्पलानां चन्द्रविकासिनाम् । धन्वन्तरिस्तु पद्ममूलं तु शालूकमित्याह ॥

(४) जलाच्छूकं १ जलनीलिका २ ॥

(५) व्रीहि १ यवो २ मसूरो ३ गोधूमो ४ मुद्ग ५ माष ६ तिल ७ चणकाः ८ अणवः ९ प्रियङ्गु १० कोद्रव ११ मयुष्टकाः १२ शालि १३ आढक्यः १४ । क्षिप्त कलाय १५ कुलत्थौ १६ सारणाश्च १७ सप्तदशानि धान्यानि ॥

(६) नान्तः कवर्गैकस्वरवदिति णत्वे गर्भपाकिणौ गर्भपाकिणः ॥

यवो[1] हयप्रियस्[2] तीक्ष्णशूक[3] स्तोक्म[1] स्त्वसौ हरित् ।
मङ्गल्यको[1] मसूरः[2] स्यात् कलाय[1]स्तु सतीनकः[2] ॥२३६॥
हरेणुः[3] खण्डिक[4] श्चाथ चणको[1] हरिमन्थकः[2] ।
माष[1]स्तु मदनो[2] नन्दी[3] वृष्यो[4] बीजवरो[5] बली[6] ॥२३७॥
मुद्ग[1]स्तु प्रथनो[2] लोभ्यो[3] वलाटो[4] हरितो[5] हरिः[6] ।
पीतेऽस्मिन् वसु[1]-खण्डीर[2]-प्रवेल[3]-जय[4]-शारदाः[5] ॥२३८॥
कृष्णे प्रवर[1]-वासन्त[2]-हरिमन्थज[3]-शिम्बिकाः[4] ।
वनमुद्गे तु वरक[1]-निगूढक[2]-कुलीनकाः[3] ॥२३९॥
खण्डी[4](1) च राजमुद्गे[1] तु मकुष्टक[2]-मयुष्टकौ[3] ।
गोधूमे[1] सुमनो[2] वल्लो[1](2) निष्पावः[2] शितशिम्बिकः[3] ॥२४०॥
कुलत्थ[1]स्तु कालवृन्त[2]स्ताम्रवृन्ता[1] कुलत्थिका[2] ।
आढकी[1] तुवरी[2] वर्णा[3] स्यात् कुल्माष[1]स्तु यावकः[2] ॥२४१॥
नीवार[1]स्तु वनव्रीहिः श्यामाक[1]-श्यामकौ[2] समौ ।
कङ्गु[1]स्तु कङ्गुनी कङ्गुः[3] प्रियङ्गुः[4] पीततण्डुला[5] ॥२४२॥
सा कृष्णा मधुका[1] रक्ता शोधिका[1] मुसटी[1] सिता ।
पीता माधव्य[1]थोद्दालः[1] कोद्रवः[2] कोरदूषकः[3] ॥२४३॥
चीनक[1]स्तु काककङ्गु[2]र्यवनाल[1]स्तु(3) योनलः[2] ।
जूर्णाह्वयो[3] देवधान्यं[4] जोन्नाला[5] बीजपुष्पिका[6] ॥२४४॥

---

(१) खण्डिनौ खण्डिनः ॥

(२) सुमनः अपूपत्वयान्नत्वात् देववत् ॥

(३) वर्वटी गणिकायां स्यात् व्रीहिभेदेऽपि बर्ब्बटी इति चोधरः, यथामरो चर्व्वन्ति बर्ब्बटी, राजमाषस्तु बर्ब्बटः इति लिङ्गानुशासनं ॥

उमा[1] भङ्गा[2] मातुलानी[3] स्यात् क्षुमा[1] तु उमा[2]ऽतसी[3] ।
गवेधुका[1] गवेधुः[2](1) स्याज्जर्तिलो[1](2)ऽरण्यजतिलः[2] ॥२४५॥
षण्ढतिल[1]स्तिलपिञ्ज[2]स्तिलपेजो[3]ऽथ सर्षपः[1] ।
कदम्बक[2]स्तन्तुभो[3]ऽथ सिद्धार्थः[1] श्वेतसर्षपः[2] ॥२४६॥
माषादयः शमीधान्यं[1] शूकधान्यं[1] यवादयः ।
स्यात् सस्यशूकं[1] किंशारुः[2] कणिशं[1] सस्यशीर्षकम्[2] ॥२४७॥
स्तम्ब[1]स्तु गुच्छो[2] धान्यादेर्नालं[1] काण्डो[2]ऽफलस्तु सः ।
पलः[1] पलालो[2] धान्यत्वक् तुषो[1] बुसे[1] कडङ्गरः[2] ॥२४८॥
धान्यं[1] मावसितं[1] रिद्धं[1] तत् पूतं निर्बुसीकृतम् ।
मूल[1]-पत्र[2]-करीरा[3]-ग्र[4]-फल[5]-काण्डा[6]-धिरूढकाः[7] ॥२४९॥
त्वक्[8] पुष्पं[9] कवकं[10] शाकं[1] दशधा शिग्रुक[2]श्च तत् ।
तण्डुलीय[1]स्तण्डुलेरो[2] मेघनादो[3]ऽल्पमारिषः[4] ॥२५०॥
बिम्बी[1] रक्तफला[2] पीलुपर्णी[3] स्यात् तुण्डिकेरिका[4] ।
जीवन्ती[1] जीवनी[2] जीवा[3] जीवनीया[4] मधुस्रवा[5] ॥२५१॥
वास्तुकं[1] तु क्षारपत्रं[2] पालक्या(3) मधुसूदनी[2] ।
रसोनो[1] लशुनो[2]ऽरिष्टो[3] म्लेच्छकन्दो[4] महौषधम्[5] ॥२५२॥
महाकन्दो[6] रसोनो ऽन्यो गृञ्जनो[1] दीर्घपत्रकः[2] ।
भृङ्गराजो[1] भृङ्गरजो[2] मार्कवः[3] केशरञ्जनः[4] ॥२५३॥

---

(1) मकुआ बरटी इति भाषा ।

(2) इत्यानुक्तान्यपि तिलनामानि लोपि यथा तिल । पूत २ हैमफलाः २ इति मदनपालः ॥

(3) पालङ्क्याम् इति वा ॥

काकमाची[1] वायसी[2] स्यात् कारवेल्लः[1] कठिल्लकः[2] ।
कूष्माण्डकस्तु कर्कारुः[2] कोशातकी[1](२) पटोलिका[2] ॥२५४॥
चिर्भिटी[1] कर्कटी[2](३) वालुङ्की[3] वारु[4]स्त्रपुसी[5] च सा ।
अर्शोघ्नः[1] सूरणः[2] कन्दः[3] शृङ्गवेरक[1] मार्द्रकम्[2] ॥२५५॥
कर्कोटकः[1] किलासघ्न[2] स्तिक्तपत्रः[3] सुगन्धकः[4] ।
मूलकं[1] तु हरिपर्णं[2] सेकिमं[3] हस्तिदन्तकम्[4] ॥२५६॥
तृणं[1] नडादि निवारादि च शस्य तु तद्भवम् ।
सौगन्धिकं[1] देवजग्धं[2] पौरं[3] कत्तृण[4]-रौहिषे[5] ॥२५७॥
दर्भः[1] कुशः[2] कुथो[3] बर्हिः[4](४) पवित्र[5]मथ ते वनः[1] ।
गुन्द्रो[1] मुञ्जः[2] शरो[4] दूर्वा[1] त्वनन्ता[2] शतपर्विका[3] ॥२५८॥
हरितालो[4] रुहा[5] पोटगल[1]स्तु धमनो[2] नडः[3] ।
कुरुविन्दो[1] मेघनामा[2] मुस्ता[3] गुन्द्रा[1] तु सोत्तमा ॥२५९॥
बल्वजा[1] उलपो[2]ऽथेक्षुः[1] स्यादसालो[2]ऽसिपत्रकः[3] ।
(५) भेदाः[1] कान्तार[1]-पुण्ड्राद्या स्तस्य मूलं तु मोरटम्[1] ॥२६०॥
काशं[1] त्विषीका[2] घासः[1] यवसं[2] तृणं[1] मर्जुनम्[2] ।

---

(२) "कोशातकी शतच्छिद्रा जालिनी क्षतवेधना, मृदङ्गफलिका क्ष्वेडा धामार्गी कर्कशच्छदा" इति ॥

(३) कर्कट्यां स्याद्दिर्वारुकर्कटी वारुकवत् उर्वारुरप्युर्वारुरपि एर्वारुश्चि र्भिटी तथा चिर्भिटं चिर्भिट क्लीबवत् वालुङ्कः स्याद्वालुङ्क्यपि । त्रपुसी त्रपुषी त्रपुसं त्रपुषम् इति शब्दभेदेनाममाला ॥

(४) पुंसि बर्हिषौ बर्हिषः क्लीबे बर्हिषी बर्हींषि ॥

(५) इक्षोर्भेदा जातयः कान्ताराद्याः एकादश ॥

विषः[१]क्ष्वेडो[२]रस[३]स्तीक्ष्णं[४]गरलो[५](१) ऽथ हलाहलः[१]॥२६१॥
वत्सनाभः[२] कालकूटो[३] ब्रह्मपुत्रः[४] प्रदीपनः[५] ।
सौराष्ट्रिकः[६]शौल्किकेयः[७]काकोलो[८]दारदो[९]ऽपि च ॥२६२॥
अहिच्छत्रो[१०] मेषशृङ्गः[११] कुष्ठ[१२]-वालुक[१३]-नन्दनाः[१४] ।
कैराटको[१५]हैमवतो[१६] मर्कटः[१७] करवीरकः[१८] ॥२६३॥
सर्षपो[१९]मूलको[२०] गौरार्द्रकः[२१] सक्तुक[२२]-कर्दमौ[२३] ।
अङ्कोल्लसारः[२४]कालिङ्गः[२५]शृङ्गिको[२६]मधुसिक्थकः[२७]॥२६४॥
इन्द्रो[२८]लाङ्गलिको[२९] विस्फुलिङ्ग[३०]-पिङ्गल[३१]-गौतमाः[३२] ।
मुस्तको[३३]दालव[३४]श्चेति स्थावरा विषजातयः(२) ॥२६५॥
(१)कुरण्टाद्या अग्रबीजा[१] मूलजा उत्पलादयः[२] ।
पर्व्वयोनय इक्ष्वाद्याः[३]स्कन्धजाः सल्लकीमुखाः[४] ॥२६६॥
शाल्यादयो बीजरुहाः[५]सम्मूर्च्छजा तृणादयः[६] ।
स्युर्वनस्पतिकायस्य षडेता मूलजातयः ॥२६७॥

इति वनस्पतिकायः ।



## द्वीन्द्रियाः ।

गोलकुः[१]कृमि[२] रन्तर्ज्जः क्षुद्रः कीटो[१] बहिर्भवः ।

---

(१) स्थावरविषजातीनामेकैकम् ॥

(२) विषभेदाः सर्व्वे पुं क्लीवलिङ्गाः इति वाचस्पतिः । पुंसि क्लीबे काकोलेत्याद्यमरोऽपि ॥

(१) वृक्षादिजातिविशेषानाह ॥

पुलका[1]स्तूभयेऽपि(1) स्युः कीकसाः[1] क्रमयो ऽथवः ॥२६८॥
काष्ठकीटो[1] घुणो[2], गण्डूपदः[1] किञ्चुलकः[2] कुसूः[3] ।
भूलता[4], गण्डूपदी[1] तु शिल्य[2] ल्पा[1] जलौकसः[2] ॥२६९॥
जलालोका[3] जलूका[4] च जलौका[5] जलसर्पिणी[6] ।
मुक्तास्फोटो[1]ऽब्धिमण्डूकी[2] शुक्तिः[3], कम्बु[1]स्तु वारिजः[2] ॥२७०॥
त्रिरेखः[3] षोडशावर्त्तः[4] शङ्खो[5], ऽथ क्षुद्रकम्बवः[1] ।
शङ्खनकाः[2] क्षुल्लकाः[3] स्युः, शम्बूका[1] स्त्वम्बुमात्रजाः ॥२७१॥
कपर्द[1]स्तु हिरण्यः[2] स्यात् पण्यास्थिक[3]-वराटकौ[4] ।

इति द्वीन्द्रियाः ।

---

## त्रीन्द्रियाः ।

दूर्नामा[1] तु दीर्घकोशी[2] पिपीलक[1]स्तु पीलकः[2] ॥२७२॥
पिपीलिका[1] तु चीणाङ्गी[2] ब्राह्मणी[1] स्थूलशीर्षिका[2] ।
घृतेली[1] पिङ्गकपिशा[2] ऽथोपजिह्वो[1]पदेहिका[2] ॥२७३॥
वम्रु[3]पदीका[4], लिक्षा[1] तु रिक्षा[2], यूका[1] तु षट्पदी[2] ।
गोपालिका[1] महाभीरु[2], र्गोमयोत्था[1] तु गर्दभी[2] ॥२७४॥
मत्कुण[1]स्तु कोलकुण[2]उद्दंशः[3] किटिभोत्[4]कुणौ ।
इन्द्रगोप[1]स्त्वग्निरजो[2] वैराट[3]स्तितिभो[4]ऽग्निकः[5] ॥२७५॥
कर्णजलौका[1] तु कर्णकीटा[2] शतपदी[3] च सा ।

इति त्रीन्द्रियाः ।

---

(१) उभये अन्तर्भवाः बहिर्भवाश्च ॥

## चतुरिन्द्रियाः ।

ऊर्णनाभ[1]स्तन्तुवायो[2]जालिको[3] जालकारकः[4] ॥२७६॥
लूति[5]र्मर्कटको[6]लूता[7]लालास्रावो[8]ऽष्टपा[9]च्च सः ।
वृश्चिको[1]द्रुण[2](1) आल्या[3]लि[4]रस्त्री[1]तत्पुच्छकण्टकः ॥२७७॥
भ्रमरो[1]मधुकृद्[2]भृङ्ग[3]श्चञ्चरीकः[4] शिलीमुखः[5] ।
इन्दिन्दिरो[6]ऽली[7]रोलम्बो[8]द्विरेफो[9]ऽस्य च डंब्रयः(2) ॥२७८॥
भोज्य स्तु पुष्प[1]-मधुनी[2](3) खद्योतो[1]ज्योतिरिङ्गणः[2] ।
पतङ्गः[1]शलभः[2](4) क्षुद्रा[1]सरघा[2] मधुमक्षिका[3] ॥२७९॥
(5)माक्षिकादि तु मधु स्यान्मधुच्छिष्टं[1] तु सिक्थकम्[2] ॥
वर्वणा[1] मक्षिका नीला पुत्तिका तु पतङ्गिका[2] ॥२८०॥
वनमक्षिका तु दंशो[1] दंशी[1] तज्जाते रल्पिका ।
तैलाटी[1]वरटा[2]गन्धोली[3] स्यात् झीरी[1] तु चीरुका[2] ॥२८१॥
झिल्लीका[3] झिल्लिका[4] वर्षकरी[5] भृङ्गारिका[6] च सा ।

द्वित्रिचतुरिन्द्रियाः सम्पूर्णाः ।

---

(१) आलमनर्थमस्यास्तीत्याली आलं स्यादनर्थ हरितालयोरित्यनेकार्थः, आलिनी आलिनः । आली आलयः ॥

(२) यौगिकशब्दनिष्पत्त्यर्थमिदम् । तेन षडङ्घ्रिः । षट्पदः इत्यादि ॥

(३) पुष्पलिट् पुष्पन्धयः, मधुलिट् मधुधयः, मधुव्रतः इत्यादि सिध्यति ॥

(४) 'शलभशब्दः तिड्डपर्यायोऽपि' यद्धैमिसूत्रं तिड्डोऽशलभेऽपि तज्जा इति शलभः पिशाचस्य इति तट्टीका शलभच्छायमित्यत्र तिड्डानां कायेत्यर्थः ॥

(५) माक्षिकं यौगिकत्वादादिशब्दाच्च क्षौद्रं सारघम्, मक्षिकामध्वराजी स्यात् इत्यनुक्तोऽपि ॥

## तिर्यक्काण्डः ।

पशु[१]स्तिर्यङ्[२]चरि[३]र्हिंस्रे ऽस्मिन् व्यालः[१]श्वापदो[२]ऽपि च ॥२८२॥

हस्ती[१] मतङ्गज[२]-गज[३]-द्विप[४]-कर्य[५]-नेकपाः[६]

मातङ्ग[७]-वारण[८]-महामृग[९]-सामयोनयः[१०(१)] ।

स्तम्बेरम[११]-द्विरद[१२]-सिन्धुर[१३]-नाग[१४]दन्तिनो[१५]

दन्तावलः[१६]करटि[१७]-कुञ्जर[१८]-कुम्भि[१९]-पीलवः[२०(२)] ॥२८३॥

इभः[२१]करेणु[२२(३)] र्गजो[२३]ऽस्य स्त्री धेनुका[१]वशा[२]ऽपि च ।

भद्रो[१]मन्द्रो[१] मृगो[१]मिश्र[१] श्चतस्रो गजजातयः ॥२८४॥

कालेऽप्यजातदन्तश्च खल्वाङ्गश्चापि मत्कुणः[१] ।

पञ्चवर्षो गजो बालः[१]स्यात् पोतो[१] दशवर्षकः ॥२८५॥

विक्को[१] विंशतिवर्षः स्यात् कलभ[१] स्त्रिंशदब्दकः ।

यूथनाथो[१] यूथपति[२] र्मत्तो[१] प्रभिन्न[२] गर्जितौ[३] ॥२८६॥

मदोत्कटो[१]मदकलः[२] समावुद्दान्त[१]-निर्मदौ[२] ।

सज्जितः[१]कल्पित[२] स्तिर्यग्घाती परिणतो[१(४)] गजः ॥२८७॥

व्यालो[१] दुष्टगजो[२]गम्भीरवेदी[१(५)] वमताङ्कुशः[२] ।

राजवाह्यो[१] भूपवाह्यः[२]सन्नाह्यः[१] समरोचितः[२] ॥२८८॥

---

(१) सामयोनिः सामयोनी ॥

(२) पीलुः पीलू ॥

(३) करेणू करेणवः ॥

(४) तिर्यग्दन्तप्रहारस्तु गजः परिणतोमतः इति हलायुधः ॥

(५) "त्वग्भेदात् शोणितस्रावात् मांसस्य च्यवनादपि । संज्ञां न लभते यस्तु गजो गम्भीरवेद्यसौ" इति अनुवाणम् ॥

चद्ग्रह[1]ल्लीषादन्तो[2] बङ्गवा घटना घटा[1] ।
मदो[1] दानं[2] प्रवृत्ति[2]श्च वमथुः[1] करशीकरः[2] ॥२८९॥
हस्तिनासा[1] करः[2] शुण्डा[3] हस्तो[4]ऽस्याग्रं तु पुष्करम्[1] ।
अङ्गुलिः[1] कर्णिका[2] दन्तौ[1] विषाणौ[2] स्कन्ध[1] आसनम्[2] ॥२९०॥
कर्णमूलं चूलिका[1] स्या दीपिका[1] त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्य्याणं[1] गण्ड[1]स्तु करटः[2] कटः[3] ॥२९१॥
अवग्रहो[1] ललाटं[2] स्या दासनः[1]कुम्भयो रधः ।
कुम्भौ[1]तु शिरसः पिण्डौ कुम्भयो रन्तरं विदुः[1]॥२९२॥
वातकुम्भ[1] स्तु तस्याधो वाहित्थ[1]तु ततो ऽप्यधः ।
वाहित्थाधः प्रतिमानं[1] पुच्छमूलं तु पेचकः[1]॥२९३॥
दन्तभागः[1] पुरोभागः पश्चभाग[1] स्तु पार्श्वतः ।
पूर्व्वं स्तु जङ्घादिदेशो गात्रं[1](१) स्यात् पश्चिमो ऽपरा[1]॥२९४॥
बिन्दुजालं पुनः पद्मं[1] शृङ्खलो[1]निगडो[2]ऽन्दुकः[3] ।
हिञ्जीर[4]श्च पादपाशो[5]वारि[1] स्तु गजबन्धभूः ॥२९५॥
त्रिपदी[1] गात्रयो(२) र्बन्ध एकस्मिन्नपरे ऽपि च ।
तोत्रं वेणुक[2] मालानं[1] बन्धस्तम्भो ऽङ्कुशः[1]सृणिः[2] ॥२९६॥
अपष्ठं[1] त्व ङ्कुशस्याग्रं यात[1]मङ्कुशवारणम् ।
निषादिनां पादकर्म्म यतं वीतं[1] तु तद्द्वयम् ॥२९७॥

(१) गच्छन्नेन गात्रं स्त्रियां गात्रा अपरभागे भवत्वादपरा क्लीबे अपरं जघनादित्वाहत्वे परा ॥

(२) गात्रयोरिति द्वयोः पूर्व्वजं घयोः एकस्मिन अपरे इति एकस्यापश्चिमजङ्घां च अपराम्ब्रस्य क्ली क्लीवत्वाद अपरे इति सप्तमी ॥

कक्ष्या[1] दूष्या[2] वरत्रा[3] स्यात् कण्ठबन्धः[1] कलापकः[2] ।
घोटक[1]स्तुरग[2]स्तार्क्ष्य[3]स्तुरङ्गो[4]ऽश्व[5]स्तुरङ्गमः[6] ॥१९८॥
गन्धर्वो[7]ऽर्वा[8](१) सप्ति[9]-वीतो[10] वाहो[11] वाजी[12] हयो[13] हरिः[14] ।
वडवा[1]ऽश्वा[2]प्रसू[3]र्वामी[4] किशोरो[1]ऽल्पवया हयः ॥१९९॥
जवाधिकस्तु जवनो[1] रथ्यो[1] वोढा रथस्य यः ।
आजानेयः[1] कुलीनः[2] स्यात् तद्देश्यास्तु(२) सैन्धवाः[1] ॥२००॥
वानायुजाः[1] पारसीकाः[1] काम्बोजा[1] बाह्लिका[1]-दयः ।
विनीतस्तु साधुवाही[1] दुर्विनीतस्तु शूकलः[1] ॥२०१॥
कश्यः[1] कशार्हो हृदलावर्त्ती श्रीवत्सकी[1] हयः ।
पञ्चभद्र[1]स्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥२०२॥
पुच्छोरः खुरकेशास्यैः सितैः स्यादष्टमङ्गलः[1] ।
सिते तु कर्क[1] कोकाहौ[2] खोङ्गाहः[1] श्वेतपिङ्गले ॥२०३॥
पीयूषवर्णे सेराहः[1] पीते तु हरियो[1] हये ।
कृष्णवर्णे तु खुङ्गाहः[1] कियाहो[1] लोहितो हयः ॥२०४॥
आनीलस्तु नीलको[1]ऽथ त्रियूहः[2] कपिलो हयः ।
वोल्लाहः[1] स्वयमेव(३) स्यात् पाण्डुकेसरवालधिः ॥२०५॥

---

(१) अर्वा अर्वाणौ अर्वाणः, अर्वाणम् शसादौ अनोऽस्य इत्यनेन आत्वमात्राकारलोपे नवमन्तसंयोगात् इत्यनेन वमन्तसंयोगपरत्वाद् कारस्य लोपाऽनुत्पत्तौ अर्वणः अर्वणा अर्वभ्यां इत्यादि मतमेतद् अन्य मते तु अर्वणस्त्रसावनञ इति पाणिनीयसूत्रेण अर्वन्तौ अर्वन्तः इत्यादि ॥

(२) स स देशो जन्मभूमिरेषाम् ।

(३) अयं त्रियूह एव ।

उराहस्तु[1] मनाक् पाण्डुः कृष्णजङ्घो भवेत् यदि ।
सुरूहको[1] गर्दभाभो वोरुखान[1]स्तु पाटलः ॥ ३०६॥
कुलाहस्तु[1] मनाक् पीतः कृष्णः स्यात् यदि जानुनि ।
उकनाहः[1] पीतरक्तच्छायः(१) स एव तु क्वचित् ॥३०७॥
कृष्णरक्तच्छविः प्रोक्तः शोणः[1] कोकनदच्छविः ।
हरिकः[1] पीतहरितच्छायः स एव हालकः[2] ॥३०८॥
पङ्गुलः[1] सितकाचाभो हलाहः[1] चित्रितो हयः ।
ययु[1]रश्वो ऽश्वमेधीयः[2] प्रोथ[1]मश्वस्य नासिका ॥३०९॥
मध्यं कश्यं निगाल[1]स्तु गलोद्देशः खुराः[1] शफाः[2] ।
अथ पुच्छं वालहस्तो[2] लाङ्गूलं[3] लूम[4](२) वालधिः[5] ॥३१०॥
अपावृत्त[1]-परावृत्त[2]-लुठितानि[3] तु वेल्लिते[4] ।
धोरितं वल्गितं[2] प्लुत[3]मुत्तेजित[4]मुत्तेरितानि[5] च ॥३११॥
गतयः पञ्च धारा[1]-ख्या तुरङ्गाणां क्रमादिमाः(३) ।
तत्र धौरितकं[1] धौर्य्यं[2] धोरणं[3] धोरितं[4] च तत् ॥३१२॥
बभ्रु-कङ्क-शिखि-क्रोड-गतिवत्[1] वल्गितं[1] पुनः ।
अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम्[2] ॥३१३॥
प्लुतं[1] तु लङ्घनं[2] पक्षि-मृग-गत्य-नुकारकम्[3] ।
उत्तेजितं[1] रेचितं[2] स्यात् मध्यवेगेन या गतिः[4] ॥३१४॥

(१) स उकनाह एव ॥

(२) लूमशब्दो व्यञ्जननकारान्तः लूम लूम्नी लूम्नि लूमानि अकारान्तोऽपीति केचित् तन्मते लूमवालधीत्येकं पदम् लूमं लूमे लूमानि ॥

(३) क्रमात् बभ्र्वादिगतिवत् धौरितकादयो भवन्ति यथा बभ्रुगतिवत् धौरितकम् ॥

उत्तेरित¹ मुपकण्ठ² मास्कन्दितक³ मित्यपि ।
चतुष्प्लुत्योत्-प्लुत्य-गमनं कोपादिवाखिलैः पदैः⁴॥३१५॥
आश्वीनो¹ऽध्वा स यो ऽश्वेन दिनेनैकेन गम्यते ।
कवी¹ खलीनं² कविका³ कवियं⁴ मुखयन्त्रणम्⁵ ॥३१६॥
पश्चाङ्घ्री¹ वक्षपट्टे तु तलिका¹ तलसारकम्² ।
दामाञ्चनं¹⁽¹⁾ पादपाशः² प्रक्खरं¹⁽²⁾ प्रखरः² समौ ॥३१७॥
चर्म्मदण्डे¹ कशा² रश्मौ¹ वल्गा²-वक्षेपणी³ कुशा⁴ ।
पर्य्याणं¹ तु पल्ययनं² वीतं¹ फल्गु हयद्विपम् ॥३१८॥
वेसरो¹ऽश्वतरो² वेगसर³ श्चाथ क्रमेलकः¹ ।
कुलनाशः² शिशुनामा³⁽³⁾ शलो⁴ भोलि⁵ र्मरुप्रियः⁶ ॥३१९॥
मयो⁷ महाङ्गो⁸ वासन्तो⁹ द्विककु¹⁰द्दुर्गलङ्घनः¹¹ ।
भूतघ्न¹² उष्ट्रो¹³ दासेरो¹⁴ रवणः¹⁵ कण्टकाशनः¹⁶ ॥३२०॥
दीर्घग्रीवः¹⁷ केलिकीर्णः¹⁸ करभ¹ स्तु त्रिहायणः ।
स तु शृङ्खलकः¹ काष्ठमयैः स्यात् पादबन्धनैः ॥३२१॥
गर्दभ¹ स्तु चिरमेही²⁽⁴⁾ वालेयो³ रासभः⁴ खरः⁵ ।
चक्रीवान्⁶ शङ्कुकर्णो⁷ऽथ ऋषभो¹ वृषभो² वृषः³ ॥३२२॥
माहेयः⁴ सौरभेयो⁵ भद्रः⁶ शक्वर⁷-शाक्वरौ⁸ ।
उक्षा⁹ऽनड्वान्¹⁰ ककुद्मान्¹¹ गौ¹² र्बलीवर्द¹³ श्च शाङ्करः¹⁴ ॥३२३॥

---

(१) पश्चात्पादबन्धनरज्जु ॥

(२) अश्वसन्नाहः "प्रक्खरं प्रक्खरोऽस्त्रियाम्" इति वैजयन्ती ॥

(३) शिशुनामाभौ शिशुनामानः ॥

(४) चिरमेहिणौ चिरमेहिणः ॥

उक्षा तु जातो⁽¹⁾ जातोक्षः¹ स्कन्धिकः¹ स्कन्धवाहकः² ।
महोक्षः¹ स्याद् वृद्धतरो² वृद्धोक्ष¹स्तु जरद्गवः² ॥३२४॥
षण्डतोचित आर्षभ्य¹ कूटो¹ भग्नविषाणकः² ।
इट्चरो¹ गोपति²ष्षण्डो³ गोवृषो⁴⁽²⁾ मदकोहलः⁵ ॥३२५॥
वत्सः¹ शकृत्करि²स्तर्णो³ दम्य¹-वत्सतरौ² समौ ।
नस्योतो¹ नस्तितः² पष्ठवाट्¹ तु स्याद्युगपार्श्वगः² ॥३२६॥
युगादीनां तु वोढारो युग्य¹-प्रासङ्ग्य²-शाकटाः³ ।
स तु सर्वधुरीणः¹ स्यात् सर्वां वहति यो धुरम् ॥३२७॥
एकधुरीणै¹-कधुरावु² भावे कधुरावहे ।
धुरीण¹ धुर्य²-धौरेय³ धौरेयक⁴-धुरन्धराः⁵ ॥३२८॥
धूर्वहे¹ऽथ गलि¹र्दुष्टवृषः शक्तोऽप्यधूर्वहः ।
गैरी¹ष्टच्य²ष्ठवाह्लो¹ द्विदन्⁽³⁾ षोडन् द्वि-षट्-रदौ² ॥३२९॥
वहः¹ स्कन्धोंऽसकूटं¹ तु ककुदं² नैचिकं¹ शिरः ।
विषाणं¹ कूणिका² शृङ्गं³ सास्ना¹ तु गलकम्बलः² ॥३३०॥

---

(1) वाहनयोग्यतां प्राप्तः ॥

(2) गोवृषो मदकोहलः इति वा ॥

(3) द्विदन्तौ द्विदन्तः, षोडन्तौ षोडन्तः, द्विशब्दात् षट्शब्दाच्च रदो योज्यते द्विदन् १ द्विरदः २। षोडन् १ षट्‌रदः २। अन्ये तु दन्तस्य दतादेशे कृते षोडश्चिति शब्दान्तरं नकारान्तं राजन्शब्दवन्नियतलिङ्ग इति हैमवृहद्वृत्तिः, तदा षोडा षोडानौ षोडानः इत्यादि षोडन्-षड्दशनः स्मृतः इति हलायुधः, द्वौ षड्वा षट्दशना दन्ता यस्य षोडन् स्वार्थे डकारोदयि प्रतादित्वात् षोडत इति तु तट्टीका तदा देववत् षोडतः षोडतौ षोडताः इत्यादि ॥

गौः[1] सौरभेयी[2] माहेयी[3] माहा[4] सुरभि[5] रर्जुनी[6] ।
उस्रा[7]ऽघ्न्या[8]रोहिणी[9]शृङ्गिण्य[10]नड्वाह्य[11]नडुह्य[12] सा[13]॥३२१॥
तम्पा[14] निलिम्पिका[15] तम्बा[16] सा तु वर्णै रनेकधा ।
पष्ठौही[1]गर्भिणी[2]वन्ध्या[1]वशा[2]वेहद्[1(1)] वृषोपगा ॥३२२॥
अवतोका[1] स्रवद्गर्भा वृषाक्रान्ता तु सन्धिनी[1] ।
प्रौढवत्सा बष्कयणी[1]धेनु[1] स्तु नवसूतिका ॥३२३॥
परेष्टु[1] र्बहुसूतिः स्यात् गृष्टिः[1] सकृत्प्रसूतिका ।
प्रजने काल्यो[1]पसर्य्या[2]सुखदोह्या तु सुव्रता[1] ॥३२४॥
दुःखदोह्या तु करटा[1] बहुदुग्धा तु बञ्जुला[1] ।
द्रोणदुग्धा[1]द्रोणदुघा[2]पीनोध्नी[1] पीवरस्तनी[2] ॥३२५॥
पीतदुग्धा[1] तु धेनुष्या[2] संस्थिता दुग्धबन्धके ।
नैचिकी[1] तूत्तमा गोषु पलिक्नी[1] बालगर्भिणी ॥३२६॥
समांसमीना[1] तु सा या प्रतिवर्षं विजायते ।
स्यादचण्डी तु सुकरा[1]वत्सकामा[1]तु वत्सला[2]॥३२७॥
चतु-स्त्रे हायणी[1(2)] ह्येका द्व्यायन्ये[1]कादि-वर्षिका ।
आपीन[1]मूधो[2]गोविट्[1(3)] तु गोमयं[2]भूमिलेपनम्[3] ॥३२
तत्र शुष्के तु गोग्रन्थिः[1] करीषं[2]-छगणो[3] ऽपि ।
गवां सर्वं गव्यं[1(4)] व्रजे गोकुलं[2]गोधनं[3]धनम्[4] ॥३२९॥

(१) वेहतौ वेहतः स्त्री ॥

(२) चतुर्हायणी १ त्रिहायणी २ गोसंख्या देहायनाद्वयसीति णी चतुस्त्रेहायनस्य वयसीति णत्वम् १ द्विहायनी १ एकहायनी २ ॥

(३) ऊधसी ऊधांसि, गोविशौ गोविशः ॥

(४) क्षीरादिकं "गव्यं गोसम्भवं सर्व्वं" मिति हलायुधः ॥

प्रजने[1] स्या दुपसरः[2] कोलः[1] पुष्पलकः[2](1) शिवः[3]।
बन्धनं[1] दाम[2](2) सन्दानं[3] पशुरज्जु स्तु दामनी[1] ॥२४०॥
अजः[1] स्यात् छगल[2] श्छाग[3] श्छगो[4] वस्तः[5] स्तभः[6] पशुः[7]।
अजा[1] तु छागिका[2] मज्जा[3] सर्व्वभक्षा[4] गलस्तनी[5] ॥२५१॥
युवा ऽजो वर्करो[1] ऽवी[1] तु मेषो[2]-र्णायु[3]रूडो[4]-रणाः[5]।
उरभ्रो[6] मेढ्रको[7] वृष्णि[8]रेडको[9] रोमशो[10] हुडुः[11] ॥२४१॥
सम्फालः[12] शृङ्गिणो[13] भेड़ो[14] मेषी[1] तु कुररी[2] रुजा[3]।
जालकिन्य[4] विला[5] वेण्य[6]थ डिकः[1] शिशुवाहकः[2](3) ॥२४२॥
पृष्ठशृङ्गो[2] वनाज[4] स्या दविदुग्धे[1] त्व वेः परम्(4)।
मोढं[2] दूसं[3] मरीसं[4] च कुक्कुरो[1] वक्रबालधिः[2] ॥२४३॥
अस्थिभु[3]ग्भषणः[4] सारमेयः[5] कौलेयकः[6] शुनः[7]।
शुनिः[8] श्यामो[9] गृहमृगः[10] कुकुरो[11] रात्रिजागरः[12] ॥२४५॥
रसनालिट्[13] रतपराः(5) कील[14]-शायि[15]-व्रणा[16]-न्दुकाः[17]।
शालावृको[18] मृगदंशः[19] श्वा[20]ऽलर्क[1]स्तु स रोगितः ॥२४६॥
विश्वकद्रु[1]स्तु कुशलो मृगव्ये सरमा[1] शुनी[2]।

---

(१) पुष्कलको गन्धमृगे कीलके क्षपणेऽपि च इति श्रीधरः। पुष्कलक इत्यपि पाठः ॥

(२) दाम दाम्नी दामनी, दामानि क्ली, दामा दामानौ दामानः स्त्री ॥

(३) वनछाग इति यस्य नाम ॥

(४) अविकोढम् १ अविदूसम् २ अविमरीसम् ॥

(५) रतकीलः १ रतशायी २ रतव्रणः ३ रतान्दुकः ४ ॥

विड्वर:[1] सूकरे ग्राम्ये महिषो[1] यमवाहन:[2] ॥२४७॥
रजस्वलो[3] वाहरिपु[4] र्लुलाय:[5] (लुलाप:) सैरिभो[6] मन्द:[7] ।
धीरस्कन्ध:[8] कृष्णशृङ्गो[9] जरन्तो[10] हंसभीरुक:[11] ॥२४८॥
रक्ताक्ष:[12] कासरो[13] हंस कालीतनय:[14]-लालिकौ[15] ।
अरण्यजे ऽस्मिन् गवल:[1] सिंह:[1] कण्ठीरवो[2] हरि:[3] ॥२४९॥
हर्यक्ष:[4] केसरी[5] भारि:[6] पञ्चास्यो[7] नखरायुध:[8] ।
महानाद:[9] पञ्चशिख:[10] पारिन्द्र:[11] पत्य[12]-री[13] मृगात्(1) ॥२५०॥
श्वेतपिङ्गो[14] ऽथ व्याघ्रो[1] द्वीपी[2] शार्दूल[3]-चित्रकौ[4] ।
चित्रकाय:[5] पुण्डरीक[6] स्तरक्षु[1] स्तु मृगादन:[2] ॥२५१॥
शरभ:[1] कुञ्जराराति[2] रुत्पादको[3] ऽष्टपा[4] दपि ।
गवय:[1] स्या द्वनगवो[2] गोसदृक्षो[3] ऽथवारण:[4] ॥२५२॥
खड्गी[1] वाध्रीणस:[2](2) खड्गो[3] गण्डको ऽथ किर:[1] किरि:[2] ।
भूदार:[3] सूकर:[4] क्रोलो[5] वराह:[6] क्रोड[7]-पोत्रिणौ[8] ॥२५३॥
घोणी[9] घृष्टि:[10] स्तब्धरोमा[11] दंष्ट्री[12] किट्या[13] स्तब्धलाङ्गुलो[14] ।
आखनिक:[15] शिरोमर्मा[16] स्थूलनासो[17] बहुप्रज:[18] ॥२५४॥
भाल्लूके[1] भालूक[2]-च्छो[3]-च्छभल्ल[4]-भल्लूक[5]-भल्लुका:[6] ।
शृगालो[1] जम्बुक:[2] फेरु:[3] फेरण्ड:[4] फेरव:[5] शिवा[6] ॥२५५॥
घोरवासी[7] भूरिमायो[8] गोमायु[9] र्मृगधूर्तक:[10] ।

---

(१) पारीन्द्रः इत्यपि इति टीका, सिंहे पारिन्द्र पारिन्द्रौ इति शब्दभेदः, मृगपति २ मृगारिः २ ॥

(२) वाध्रीव नासिकाऽस्य वाध्रीणसः कर्बूराङ्ग मव इति मथा देशः ॥

फेरवो¹¹ जम्बुकः¹² क्रोष्टा¹³ शिवाभेदे ऽल्पके किखिः¹ ॥३५६॥
स्थौ अरण्यश्व¹लोपाकौ² कोकः¹ स्वी ईहामृगो² वृकः³ ।
अरण्यश्वा⁴ मर्कटस्तु कपिः²कीशः³ प्लवङ्गमः⁴ ॥३५७॥
प्लवङ्गः⁵ प्लवगः⁶ शाखामृगो⁷ हरि⁸ र्वलीमुखः⁹ ।
वनौका¹⁰ वानरो¹¹ ऽथासौ गोलाङ्गूलो¹ ऽसिताननः² ॥३५८॥
मृगः¹ कुरङ्गः² सारङ्गो³ वातायु⁴ र्हरिणा⁵ वपि ।
मृगभेदा रुरु¹-न्यङ्कु²-रङ्कु³-गोकर्ण⁴शम्बराः ॥३५९॥
चमूरु⁶-चीन⁷चमराः⁸ समूरै⁹ण-¹⁰-ऋश्य¹¹-रौहिषाः¹² ।
कदली¹³ कन्दली¹⁴ कृष्णसारः¹⁵⁽¹⁾ पृषत¹⁶-रोहितौ¹⁷ ॥३६०॥
दक्षिणेर्मा⁽²⁾ तु स मृगो यो व्याधै र्दक्षिणे क्षतः ।
वातप्रमी¹र्वातमृगः शशस्तु मृगलोमकः² ॥३६१॥
शूलिको³ लोमकर्णो⁴ ऽथ शल्यः¹ शल²-शल्यकौ³ ।
श्वावि⁴च्च तच्छलाकायां शललं⁽³⁾ शलमि⁵त्यपि ॥३६२॥
गोधा¹निहाका² गौधेर¹-गौधारौ² दुष्टतत्सुते ।
गौधेयो¹ऽन्यत्र⁽⁴⁾ मुसली¹ गोधिका²-गोलिके³ गृहात्⁽⁵⁾ ॥३६३॥
माणिक्य⁴ भित्तिका⁵ पल्ली⁶ कुड्यमत्स्यो⁷ गृहोलिका⁸ ।

---

(१) कृष्णेन वर्णेन शरः शबलः कृष्णसारः इति टीका, अन्यमते कृष्णसार कावसारौ यदन्यकौ च तालव्यौ च इति शब्दभेदनाम-माला ॥

(२) दक्षिणेर्माणौ दक्षिणे ईर्मं व्रणं यस्य मृगः ॥

(३) शललं शलमिति द्वौ तालव्यादी सराद्यौ ॥

(४) दुष्टादन्यत्र ॥

(५) गृहगोधिका १ गृहगोलिका २ ॥

स्या दञ्जनाधिका[1] हालि[2]न्यञ्जनिका[3] हलाहलः[4] ॥३६४॥
स्थूलाञ्जनाधिकाया तु ब्राह्मणी[1] रक्तपुच्छिका[2] ।
कृकलास[1]स्तु सरटः[2] प्रतिसूर्यः[3] शयानकः[4] ॥३६५॥
मूषिको[1] मूषको[2] वज्रदशनः[3] खनको[4]ऽन्दुरौ[5] ।
उन्दुरु[6]र्वृष[7] आखु[8]श्च स्युः आखो[9] वृषलोचने[10] ॥३६६॥
छुछुन्दरी[1] गन्धमूष्यां[2] गिरिका[1] बालमूषिका[2] ।
बिडाल[1]श्चोतु[2]र्मार्जारो[3] हीकु[4]श्च वृषदंशकः[5] ॥३६७॥
जाहकी[1] गात्रसङ्कोची मण्डली[2] नकुलः[1] पुनः ।
पिङ्गलः[2] सर्पहा[3] बभ्रुः[4] सर्पो[1]ऽहिः[2] पवनाशनः[3] ॥३६८॥

भोगी[4] भुजङ्ग[5]-भुजगा[6] वुरगो[7] द्विजिह्व[8]-
व्यालो[9] भुजङ्गम[10]-सरीसृप[11]-दीर्घजिह्वाः[12] ।
काकोदरो[13] विषधरः[14] फणभृत्[15] पृदाकु[16]
र्वक्रगो[17]-कुण्डलि[18]-बिलेशय[19]-दन्दशूकाः[20] ॥३६९॥

दर्वीकरः[21] कञ्चुकि[22]-चक्रि[23]-गूढ-
पात्[24] पन्नगा[25] जिह्मग[26]-लेलिहानो[27] ।
कुम्भीनसा[28]-शीविष[29]-दीर्घपृष्ठाः[30]
स्या द्राजसर्प[1]स्तु भुजङ्गभोजी[2] ॥३७०॥

चक्रमण्डल्य[1] अजगरः[2] पारीन्द्रो[3] वाहसः[4] शयुः[5]
अलगर्दो[1] जलव्यालः[2] समौ राजिल[1]-डुण्डुभौ[2] ॥३७१॥
भवेत्तिलित्सो[1] गोनासो[2] गोनसो[3] घोणसो[4]ऽपि च ।
कुक्कुटाहिः[1] कुक्कुटाभो[2] वर्णेन च रवेण च ॥३७२॥
नागाः[1] पुनः काद्रवेया[2] स्तेषां (भोगवती) भोगावती[1] पुरी ।
शेषो[1] नागाधिपो[2]ऽनन्तो[3] द्विसहस्राक्ष[4] आलुकः[5] ॥३७३॥

स च भ्रामो ऽथवा शुक्लः सितपङ्कजलाञ्छनः ।
वासुकिस्तु[1] सर्पराजः[2] श्वेतो नीलसरोजवान् ॥२७४॥
तक्षकस्तु[1] लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ।
महापद्मस्तु[1] विशुक्लो दशबिन्दुकमस्तकः ॥२७५॥
शङ्खस्तु[1] पीतो बिभ्राणो रेखां सिन्दुसितां गले ।
कुलिको[1] ऽर्द्धचन्द्रमौलिः ज्वालाधूमसमप्रभः ॥२७६॥
अथ कम्बला[1]श्वतर[2]-धृतराष्ट्र[3]-बलाहकाः[4] ।
इत्यादयो ऽपरे नागास्तत्कुलसमुद्भवाः ॥२७७॥
निर्मुक्तो[1] मुक्तनिर्मोकः सविषा निर्व्विषाश्च ते(1) ।
नागाः स्युर्दृग्विषा[1]लूमविषास्तु[1] वृश्चिकादयः ॥२७८॥
व्याघ्रादयो लोमविषा[1] नखविषा[1] नरादयः ।
लालाविषास्तु[1] लूताद्याः कालान्तरविषाः[1] पुनः ॥२७९॥
मूषिकाद्या दूषीविषं[1] त्ववीर्य्यमौषधादिभिः(2) ।
कृत्रिमं तु विषं चार[1]गर[2]श्चोपविषं[3] च तत् ॥२८०॥
भोगो[2]ऽहिकायो दंष्ट्रा ऽशी[1](3) दर्वी[1] भोगः[2] फटः[3] स्फुटः[4] ।
फणो[5]ऽहिकोषस्तु निर्ल्वयनी[2] निर्मोक[3]-कञ्चुकाः[4] ॥२८१॥

इत्यहिकायः ।



---

(1) विषेण सहिताः सर्पा नागादयः निर्व्विषा अजगरादयः ।

(2) यद् औषध मन्त्रप्रयोगादिभिः अवीर्य्यं भवति तद्दूषीविषमित्युच्यते ।

(3) आशिषो आशिषः स्तो दन्ताः ।

विहगो[१] विहङ्गम[२]-खगौ[३] पतगो[४] विहङ्गः[५]
शकुनिः[६] शकुन्ति[७]-शकुनौ[८] वि[९]-वयः[१०](१) शकुन्तः[११]।
नभसङ्गमो[१२] विकिर[१३]-पत्ररथौ[१४] विहायो[१५](२)
द्विज[१६]-पक्षि[१७]-विष्किर[१८]-पतत्रि[१९]-पतत्[२०] पतङ्गाः[२१](३) ॥३८२॥
पित्सन्[२२] नीडा[२३]-ण्डजो[२४] ऽगौकाः[२५](४) चञ्चुश्[१] चञ्चूः[२] सृपा-टिका[३]।
त्रोटि[४]श्च पक्षं[१] पतत्रं[२] पिच्छं[३] वाज[४]स्तनूरुहम्[५] ॥३८३॥
पक्षो[६] गरुच्[७]छद[८]श्चापि(५) पक्षमूलं तु पक्षतिः[१]।
प्रडीनो[१]ड्डीन[२]-सण्डीन[३]-डयनानि[४] नभोगतौ ॥३८४॥
पेशी(६) कोशोऽण्डे[१] कुलायो[१] नीडे[२] केकी[१] तु सर्पभुक्[२]।
मयूर[३]-बर्हिणौ[४] नीलकण्ठो[५] मेघसुहृ[६]च्छिखी[७] ॥३८५॥
शुक्लापाङ्गो[८]ऽस्य वाक् केका[१] पिच्छं(७) बर्हं[२] शिखण्डकः[३]।
प्रचलाकः[४] कलाप[५]श्च मेचकः[१] चन्द्रकः[२] समौ ॥३८६॥
वनप्रियः[१] परभृत[२]स्ताम्राक्षः[३] कोकिलः[४] पिकः[५]।
कलकण्ठः[६] काकपुष्टः[७] काको[१]ऽरिष्टः[२] सकृत्प्रजः[३] ॥३८७॥

---

(१) स्त्रियां वी व्यौ व्यः, नदीवत् विः वी वयः, वयसी वयांसि क्लीं ॥

(२) विहायाः विहायसौ विहायसः ॥

(३) पतत्रि नान्तः पतन् पतन्तौ पतन्तः ॥

(४) नीडजः १ अण्डजः २ नगौकाः सान्तः ॥

(५) गरुतौ गरुतः पुं गरुती गरुन्ति क्लीं ॥

(६) पेशी १ कोशः २ अण्डः ३ नामत्रयमित्यन्ये ॥

(७) पिच्छमिति विशेषणं तेन बर्हादि चत्वार्येव नामानीत्यन्ये ॥

आत्मघोष[४]श्चिरजीवी[५]घूकारिः[६] करटो[७]द्विकः[८] ।
एकदृग्[९] बलिभुक्[१०] ध्वाङ्क्षो मौकुलि[१२] र्वायसो[१३] ऽन्य-
भृत्[१४(१)] ॥२८८॥

वृद्ध-द्रोण-दग्ध-कृष्ण-पर्व्वते-भ्य स्त्वमी[५] परः[(२)] ।
पवनाश्रय[६]श्च काकोलो[७] मद्गु[१]स्तु जलवायसः[२] ॥२८९॥

घूको[१] निशाटः[२] काकारिः[३]कौशिको[४] लूक[५]-पेचकाः[६] ।
दिवान्धो[१] ऽथ निशावेदी[१] कुक्कुट[२] श्चरणायुधः[३] ॥२९०॥

कृकवाकु[४]स्ताम्रचूडो[५]विवृताक्षः[६(३)] शिखण्डिकः[७] ।
हंसा[१]श्चक्राङ्ग[२]-वक्राङ्ग[३]-मानसौकः[४]-सितच्छदाः[५] ॥२९१॥

राजहंसा[१] स्त्वमी चञ्चुचरणैरतिलोहितैः ।
मल्लिकाक्षा[१(४)]स्तु मलिनै र्धार्त्तराष्ट्राः[१] सिते-तरैः ॥२९२॥

कादम्बा[१]स्तु कलहंसाः[२] पक्षैः स्यु रतिधूसरैः ।
वारला[१] वरला[२] हंसी[३]वारटा[४] वरटा[५]च सा ॥२९३॥

दार्वाघाटः[१] शतपत्रः[२] खञ्जरीट[१]स्तु खञ्जनः[२] ।
सारस[१]स्तु लक्ष्मणः[२]स्यात् पुष्कराख्यः[३] कुरङ्करः[४] ॥२९४॥

सारसी[१] लक्ष्मणा[२] ऽथ कुङ्[१(५)] क्रौञ्चे[२] चाषे[१]किकीदिविः[२] ॥

---

(१) अन्यभृतौ अन्यभृतः ॥

(२) वृद्धकाकः १ द्रोणकाकः २ दग्धकाकः ३ कृष्णकाकः ४ पर्व्वतकाकः ५ ॥

(३) विवृते अक्षिणी अस्य विवृताक्षः इति टीका ॥

(४) मल्लिकाकारे अक्षिणी एषां मल्लिकाक्षाः शुक्लापाङ्गत्वात् इति टीकाकृतः ॥

(५) क्रुञ्चौ क्रुञ्चः ॥

चातकः[1] स्तोकको[2] बप्पीहः[3] सारङ्गो[4] नभोम्बुपः[5] ॥३९५॥
चक्रवाको[1] रथाङ्गाह्वः[2] कोको[3] द्वन्द्वचरो[4]ऽपि च ।
टिट्टिभ[1]स्तु कटुक्वाण[2] उत्पादशयन[3]श्च सः ॥३९६॥
चटको[1] गृहबलिभुक्[2] कलविङ्कः[3] कुलिङ्गकः[4] ।
तस्य योषित्तु चटका[1] स्त्र्य-पत्ये चटका[1] तयोः ॥३९७॥
पुमपत्ये चाटकैरो[1] दात्यूहो[1] कालकण्टकः[2](1) ।
जलरङ्कु[3]र्जलरङ्कः[4] बको[1] कह्वो[2] बकोट[3]-वत् ॥३९८॥
बलाहकः[1] स्याद्बलाको[1] बलाका[1] विसकण्ठिका[2] ।
भृङ्गः[1] कलिङ्गो[2] धूम्याटः[3] कङ्क[1]स्तु कमनच्छदः[2] ॥३९९॥
लोहपृष्ठो[3] दीर्घपादः[4] कर्कटः[5] स्कन्धमल्लकः[6] ।
चिल्लः[1] शकुनि[2]रातापी[3] श्येनः[1] पत्री[2] शशादनः[3] ॥४००॥
दाक्षाय्यो[1] दूरदृग्[2] गृध्रो[3]ऽथोत् क्रोशो[1] मत्स्यनाशनः[2] ।
कुररः[3] कीर[1]स्तु शुको[2] रक्ततुण्डः[3] फलादनः[4] ॥४०१॥
शारिका[1] तु पीतपादा[2] गोराटी[3] गोकिराटिका[4] ।
स्याच्चर्मचटिकायां[1] तु जतुका[2]ऽजिनपत्रिका[3] ॥४०२॥
वल्गुलिका[1] मुखविष्ठा[2] परोष्णी[3] तैलपायिका[4] ।
कर्करेटुः[1] करेटुः[2] स्यात् करटुः[3] कर्कराटुकः[4] ॥४०३॥
आटि[1]रातिः[2] शरारिः[3] स्यात् क्रकण[1]-क्रकरौ[2] समौ(2) ।

---

(१) कालाः कण्टका रोमोद्भेदोऽस्य कालकण्टकः काजः कण्ठोऽस्य कालकण्ठ इत्यन्ये। शब्दभेदे तु "जलरङ्कौ जलरङ्कः कालात्-कण्टक कण्टकौ" इति ॥

(२) गौरतित्तिरिः इत्यस्य टीका, शब्दरत्नाकरे तु क्रकणक्रकरा उभौ कपिञ्जले इति ॥

भासे[1] शकुन्तः[2] कोयष्टौ[1] शिखरी[2] जलकुक्कुभः[3] ॥४०४॥
पारापतः[1] कलरवः[2] कपोतो[3] रक्तलोचनः[4] ।
ज्योत्स्नाप्रिये[1] चलचञ्चु[2]-चकोर[3]-विषसूचकाः[4] ॥४०५॥
जीवंजीव[1]स्तु गुन्द्रालो[2] विषदर्शनमृत्युकः[3] ।
व्याघ्राट[1]स्तु भरद्वाजः[2] प्लव[1]स्तु गात्रसंप्लवः[2] ॥४०६॥
तित्तिरि[1]स्तु खरकोणो[2] हारीत[1]स्तु मदङ्कुरः[2] ।
कारण्डव[1]स्तु मकलः[2] सुरह[1]स्त्वसुस्रपिचकः ॥५०७॥
कुम्भकारकुक्कुट[1]स्तु कुक्कुभः[2] कुहकस्वनः[3] ।
पक्षिणा येन रक्ष्यन्ते पक्षिणोऽन्ये स दीपकः[1] ॥४०८॥
छेका[1] रक्ष्या[2]श्च ते गेहासक्ता ये मृगपक्षिणः ।

इति पञ्चेन्द्रियाः ।



मत्स्यो[1] मीनः[2] पृथुरोमा[3] झषो[4] वैसारिणो[5]ऽण्डजः[6] ॥४०९॥
सङ्कुचारी[7] स्थिरजिह्व[8] आत्माशी[9] स्वकुलक्षयः[10] ।
विसारः[11] शकली[12] शल्की[13] शम्बरो[14]ऽनिमिष[15] स्तिमिः[16] ॥४१०॥
सहस्रदंष्ट्रे[1] वादालः[2] पाठीने[1] चित्रवल्लिकः[2] ।
शकुले[1] स्यात् कलको[2]ऽथ गडकः[1] शकुलार्भकः[2] ॥४११॥
उलूपी[1] शिशुके[2] प्रोष्ठी[1] शफरी[2] श्वेतकोलके[3] ।
नलमीन[1]श्चिलिचिमो[2] मत्स्यराज[1]स्तु रोहितः[2] ॥४१२॥
मद्गुर[1]स्तु राजशृङ्गः[2] शृङ्गी[1] तु मद्गुरप्रिया[2] ।
क्षुद्राण्डमत्स्यजातं तु पोताधामं[1] जलाणुकम्[2](1) ॥४१३॥

(1) अत्र क्वचित् जलाणुकं कलयेचिरितिरिति इकः ॥

महामत्स्या[1]स्तु चीरल्लि तिमिङ्गिलगिलादयः ।
अथ यादांसि[1] नक्राद्या हिंसका जलजन्तवः ॥४१४॥
नक्रः[1] कुम्भीर[2]नालास्यः[3]कुम्भी[4]महामुखो[5]ऽपि च ।
तालुजिह्वः[6]शङ्कुमुखो[7]गोमुखो[8] जलसूकरः[9] ॥४१५॥
शिशुमार[1] स्त्वम्बुकूर्म्म[2] उष्णवीर्य्यो[3] महावसः[4] ।
उद्र[1]स्तु जलमार्जारः[2] पानीयनकुलो[3] वसी[4] ॥४१६॥
ग्राहो[1] तन्तु[2] स्तन्तुनागो[3]ऽवहारो[4]नाग[5] तन्तुणौ[6] ।
अन्येपि यादोभेदाः स्यु र्बहवो मकरादयः[1] ॥४१७॥
कुलीरः[1] कर्कटः[2] पिङ्गचक्षुः[3] पार्श्वोदरप्रियः[4] ।
द्विधागतिः[5]षोड़शांह्रिः[6] कुरचिल्लो[7] बहिश्चरः[8] ॥४१८॥
कच्छपः[1] कमठः[2] कूर्म्मः[3] क्रोडपाद[4] श्चतुर्गतिः[5] ।
पञ्चाङ्गगुप्त[6]-दौलेयौ[7]जीवथः[8]कच्छपी[1] डुली[2] ॥४१९॥
मण्डूको[1] हरि[2]-शालूर[3]प्लव[4] भेक[5]-प्लवङ्गमाः[6] ।
वर्षाभूः[7]प्लवगः[8]शालुर[9]-जिह्म[10]-व्यङ्ग[11]-दर्दुराः[12] ॥४२०॥
स्थले नराद्यो ये तु ते जले जलपूर्व्वकाः[1(1)] ।
अण्डजाः[1]पक्षिसर्पाद्याः[1]पोतजाः[1(2)] कुञ्जरादयः[2]॥४२१॥
रसजा[1(3)] मद्यकीटाद्या[2]नृगवाद्या जरायुजाः[4] ।

---

(१) जलशब्दः पूर्व्वं येषां यथा जलनरः जलहस्ती जलतुरगः एवं अम्बुनरः तोयकरी नीरघोटक इत्यादि ॥

(२) पोतो नाम जरायुरहितो गर्भः आदिनाश्वाविच्छशशारिकाद्याः ॥

(३) रसाज्जायन्ते इति रसजाः आदिना घृतकीटाद्याः ॥

यूकाद्याः स्वेदजा[५] मत्स्यादयः सम्मूर्च्छनोद्भवाः[६(१)] ॥४२२॥
सञ्जना सू-द्भिदो[७(२)]ऽथोपपादुका[१] देवनारकाः।
तत्रयोनय इत्यष्टा[(३)] वुद्भि[१]रुद्भिज्ज[२]मुद्भिदम्[३] ॥४२३॥
इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां तिर्य्यक्काण्डश्चतुर्थः ॥ ४ ॥



## अथ नरककाण्डः।

स्युर्नारका[१]स्तु परेत[२]-प्रेत[३]-याम्या[४]-तिवाहिकाः[५]।
आगू[१] र्विष्टि[२] र्यातना[१] तु कारणा[२] तीव्रवेदना ॥१॥
नरक[१]स्तु नारकः[२] स्या न्निरयो[३] दुर्गति[४] श्च सः।
घनोदधि[१(४)]-घनवात[२]-तनुवात[३]-नभः[४]-स्थिताः ॥२॥
रत्न-शर्करा-वालुका-पङ्क-धूम-तमः-प्रभाः[६(५)]।

---

(१) सम्मूर्च्छनादुद्भवो येषां सम्मूर्च्छजा इत्यर्थः आदिना सर्पादयो गृह्यन्ते॥

(२) उद्भिदति भुवमिति क्विपि उद्भिदः वक्ष्यमाणादन्येऽपि प्रभ-भादयः, उपपद्यन्ते स्वयमिति एवं शोक्ताः उपपादुकाः॥

(३) सर्वासां जोवानां योनयः उत्पत्तिस्थानानि अष्टावण्डजा-द्यः॥

(४) घननिविड़ उदधिः। एवं घनश्चासौ वातश्च। तनुश्चासौ वातश्च। नभः आकाशः। घनोदध्यादिषु प्रत्येकमवस्थिताः क्रमात् पृथुतराः अधोऽधो रत्नप्रभाद्याः सप्तनरकभूमयो भवन्ति ॥

(५) रत्नप्रभा १ शर्कराप्रभा २ वालुकाप्रभा ३ पङ्कप्रभा ४ धूम-प्रभा ५ तमःप्रभा ६ क्रमेण रत्नप्रभाद्यासु सप्तनरकभूमिषु नरकावास संख्यामाह अथेति॥

